ओ३म्

अथ सिद्धान्तिभाष्यसंहितम्

# आश्वलायनश्रौतसूत्रम् ।



## अथ द्वितीयोऽध्यायः ।

### पौर्णमासेनेष्टिपशुसोमा उपदिष्टाः ॥ १ ॥

पौर्णमासस्येदं पौर्णमासम्। किं तत्? तन्त्रमिति केचित्। तन्नोपपद्यते। यदि तन्त्रस्यैवातिदेशः स्यादावापो न प्राप्नुयात्। इहेष्ट्यांदिष्वांवापस्यापि प्राप्तिं दर्शयत्याचार्यो यदयमाह "देवताधर्मे[3] भागौ च" (/="देवतागमे नित्यानामपायः। याः स्विष्टकृतमन्तराज्यभागौ च") इति। आवापिकानां देवतानां प्रतिषेधः। तस्मान्न केवलस्य तन्त्रातिदेश (=?तन्त्रस्यातिदेश) इति सिद्धम्[1]। तस्मात्पौर्णमासेन लक्षणेनेति ब्रूमः। तेनेष्टिपशुसोमा उपदिष्टाः।

---

(१) प्राप्नुयादिहेष्ट्या-B[2]; प्राप्नुयादिति हेष्ट्या-B[1]. There is a big lacuna here in B[3].

(२) -दिष्वा-B[1]; -ष्वा-B[2].

(३) B[1]; यदयमहादेवताधर्मे B[2].

आह। पौर्णमासेनातिदेशात्पौर्णमासमेवाधिकृत्य विहितम् "अग्नीषोमीयं पौर्णमास्याम्", "तौ(=एतौ)वार्त्रघ्नौ पौर्णमास्याम्" इति तावदेवातिदेशेन प्राप्नोति, दर्शपूर्णमासयोरुभयोः सह विहितत्वादितरस्य न प्राप्तिर्भवति[1]। कुतः। नहि सामान्यधर्मा अतिदेशेन प्राप्नुवन्ति। नैष दोषः। "दर्शपूर्णमासौ तु पूर्वं व्याख्यास्यामः" इत्यत्राधिकारवाक्ये पौर्णमासस्यापि निर्देशादुभयोर्दर्शपूर्णमासयोर्यत्सह विहितं तदपि सर्वं पौर्णमासग्रहणेनैवाप्युत्कृष्यते।

किञ्च रावक[2]पूर्णकमातृवत्। यथा लोके रावक[3]पूर्णकयोर्मातेति कांचिन्निर्दिश्य पुनः ता(?=रा)वक[4]मातरमानयेत्युक्ते या पूर्वके[5](?=त्र) निर्दिष्टा ता(?=रा)व(क)पूर्ण(क)योर्[6] माता सैवानीयते। तथा पूर्णक(?+मातर)मानयेत्युक्ते। तद्वदिहापि पौर्णमासग्रहणेनैवापि दर्शपूर्णमासयोरुभयोर्यत्सह विहितं तत्सर्वकर्म[7]कृष्यते।

---

(१) न प्राप्तिर्भवति $B^2$; न प्राप्नोति $B^1$.

(२) रावक-$B^1$ $B^2$. Cp. Pāṇini V. 3, 75. Both $B^1$ and $B^2$ mostly agree in reading तावक instead of रावक in the following. The original reading however might have been रावक (or even धावक).

(३) रावक-$B^1$, त्यवक-$B^2$.

(४) तावक-$B^1$ $B^2$.

(५) पूर्वत $B^2$; पूर्वक $B^1$.

(६) तावपूर्णयोर् $B^1$; तावपूर्णयोर् $B^2$.

(७) $B^1$; सर्वकर्म करिष्यते $B^2$.

किन्त्विह पौर्णमासेनातिदेशाद्दर्शमेवाधिकृत्य यदुक्तं तन्न प्राप्नोति। यदि दर्शमपीष्टं स्याद्दर्शपौर्णमासाभ्यामित्येवमवक्ष्यत्। यस्मादेवं नोच्यते तस्मान्न दर्शना (१=दर्शेना)तिदेश इति।

सोमग्रहणं सोमेऽसमाम्नातानामपि त्रैधातवीयानामिष्टीनां पौर्णमासमेव तन्त्रं कथं स्यान्नार्थात्तन्त्रविकार इति। एतदर्थं सोमग्रहणम्। इतरथा त्रैधातवीया (२+नाम्) इन्द्राविष्णोर्देवतात्वादमावास्यातन्त्रं स्यात्, तन्मा भूदिति।

अथवा पौर्णमासे मन्द्रादीनां स्वराणां षष्ठेन यमेन प्रयोगः, सप्तमेन वषट्कारः। तद्वत्सोमेऽपि स्यादित्येतदर्थं सोमग्रहणम्। उत्तरसूत्रार्थं वा सोमग्रहणम्।

यथा "*एतेनाह्ना सुत्यानि*", "*एतेन शस्त्रयाज्यानिगदानुवचनाभिष्टवनसंस्तवनानि*" इत्येवमादिषु उपदिष्टानीति नोच्यते, अनुच्या (६=अनुक्त्वा)प्यर्थाद्वाक्यशेषोऽध्याह्रियते उपदिष्टानीति। तद्वदिहापि सिद्ध उपदिष्टा इति वचनं नियमार्थम्। पौर्णमासेनै-

---

(१) B[2]; दर्शपूर्ण-B[1].
(२) दर्शना-B[1] B[2].
(३) त्रैधातवीया-B[1]. त्रैधातवियाद्-B[2].
(४) B[1]; त्रैधात्रया B[2].
(५) शस्त्रयानामि-B[1]; शस्त्रयानानि-B[2].
(६) अनुच्या-B[1] B[2].
(७) -ह्री-B[1]; -ह्रि-B[2].

वोपदिष्टानि, नामावास्येनेति[1] । इतरथा ता(?=रा)वक[2] पूर्णकमात्र्-वत्पौर्णमासग्रहणेनैवोभयग्रहणं भवतीति कृत्वा ग्रहणेषु[3] (?), पशौ चामावास्यं तन्त्रं कुर्यात् , तन्मा भूदिति ॥

## तैरमावास्यायां पौर्णमास्यां वा यजेत ॥ २ ॥

इहामावास्यापौर्णमासीग्रहणेन पर्वप्रतिपदा उभे अपि[4] गृह्येते । तत्र प्रायेणाचार्या इष्टिपशुबन्धादिभिः प्रतिपदि याग-मिच्छन्ति । सोमस्य तु प्रतिपदि पर्वणि वारम्भः, सुत्या वा भवति । आपस्तम्बस्यापि वचनम् "पौर्णमास्यां दीक्षा यजंतीये[5] (=यजनीये) वा । पौर्णमास्यां यजतीये[6] (=यजनीये) वा सुत्येमहः" (आप० श्रौ०सू० १०।१५।४) । "अमावास्यायां दीक्षा यजनीये[7] (=यजनीये वा) । अमावास्यायां यजनीये[8] वा सुत्यमहः" (आप० श्रौ०सू० १०।१५।४) इति । अस्यापि सर्व(?=पर्व)प्रतिपदोरुभयोः पर्वाभिप्रायः[9] ।

---

(१) $B^2$; नामावास्यानीति $B^1$.
(२) तावक-$B^1$ $B^2$.
(३) ग्रहणेषु $B^1$ $B^2$.
(४) उभेपि $B^1$; नुभेपि $B^2$.
(५) दीक्षा यजंतीये $B^2$; दीक्षया यजतिये $B^1$.
(६) यजतीये $B^2$; यजतिये $B^1$.
(७) दीक्षा यजनीये $B^2$; दीक्षा यजंति $B^1$.
(८) -स्यां यजति $B^1$; -स्यायां यजनी वा $B^2$.
(९) सर्वा-$B^2$; पर्वा-$B^1$.

[1]सूत्रकारेणाप्युक्तम्—

"प्रतिपद्येव[2] केषांचिद्विकृतेरिच्छति[3] कियाम् ।
पौर्णमासं च दर्शं च ब्रुवन्प्रतिपदावपि ॥ "इति ।

पौणमास्याममावास्यायां वेति मुख्यत्वात्पौर्णमास्याः पर्वक्रमेण पूर्वं पौर्णमास्यामिति वक्तव्ये सत्यमावास्यायां(?=-याः) पूर्वनिपातनममावास्यापौर्णमास्योर(?)न्तरा यः कालः पूर्वपक्षः[4] तस्यापि परिग्रहणार्थम् । शांवलिकां(?) वचनं[5] "प्रतिपदि दीक्षा पञ्चम्यां सुत्यम् ,, द्वितीयाया दीक्षा षष्ठ्यां सुत्यम् , तृतीयायां दीक्षा सप्तम्यां सुत्यम्" इत्येवमादि ॥

## राजन्यश्चाग्निहोत्रं जुहुयात् ॥ ३ ॥

चशब्देन पूर्वोक्तो वाशब्द आकृष्यमाणः समुच्चयाय भवति। अमावास्यायां च पौणमास्यां चेति । इह तु पर्वशब्दः पर्वण्येव वर्त्तते, न प्रतिपदि । जुहुयात्[6] । धारयेदित्यर्थः । अन्यस्मिन् जुह्वत्यपि राजन्यो जुहोतीत्युच्यते । यथा "सोमसुत्सदा जुहु-

( १ ) B[1]; उत्सूत्र-B[2].
( २ ) -पद्येव B[2]; -पद्ये B[1].
( ३ ) B[1]; वक्तंतेरिछंति B[2].
( ४ ) पूर्वपक्षः B[2]; पूर्वः पक्षः B[1].
( ५ ) B[1]; त्यावयनीकां वनुनं ( sic ) B[2].
( ६ ) B[2]; तेन ( for न) प्रतिपदि जुह्वयात् B[1]

यात्[1] इत्यत्र ऋत्विक्षु सोमं सुन्वत्स्वपि स्वयमेव सोमसुद्भवति। यथा लोके राजपुरुषैर्जितेऽपि राज्ञा जितमिति। वद्वदिहापीति। यत्र[1] तु स्वयंहोम इष्यते तत्र स्वयंग्रहणं करोति "यवाग्वा[2] पयसा वा स्वयं पर्वणि जुहुयात्"इति ॥

## तपस्विने ब्राह्मणायेतरं कालं भक्तमुपहरेत् ॥ ४ ॥

ब्राह्मणायेत्यनुच्यमाने यदि ब्राह्मणस्तपस्वी न लभ्यते तदा अब्राह्मणायापि तपस्विने दद्यात्, तन्मा भूत्। अतपस्कायापि ब्राह्मणायैव दद्यादित्येतदर्थं ब्राह्मणग्रहणम्।

आमस्य वा पक्वस्य वान्नस्य भक्तसंज्ञा।

दद्यादिति सिद्धेऽप्युपहेरदिति नीत्वा[3] दानं चोद्यते।

सायं प्रातरेतत् कर्म कर्त्तव्यम् ॥

## ऋतसत्यशीलः सोमसुत्सदा जुहुयात् ॥ ५ ॥

ऋतं मनसि। सत्यं वाचि। अयमनयोर्विशेषः। ऋते सत्यं प्रतिष्ठितमिति। मनसा चिन्तितमेव पुनर्वाचा वदति, नाचिन्तितम्। तस्मादृते[4] सत्यस्यान्तर्भावादृतशील इत्येव सिद्धे-

(१) B²; तत्र B¹.

(२) B²; यवाग्वा वा B¹.

(३) नीत्वा B²; नेत्वा B¹.

(४) ऋते B²; ऋते तस्य B¹.

ऽपि सत्यस्य पृथग्[1] ग्रहणं यद्यप्यृतशीलो न स्यात्सत्यशील-त्वेनापि सदा जुहुयादित्येतदर्थम्।

सोमसुदिति पूर्वोक्तेन गुणेन समुच्चयः। उभयगुणत्वेनापि सदा जुहुयादिति॥

## बहुषु बहूनामनुदेश आनन्तर्ययोगः॥ ६॥

"ग्रीष्मवर्षाशरत्सु क्षत्रियवैश्योपक्रुष्टाः" इत्युक्ते यः कश्चिदृतु-र्यस्य कस्यचिद्वर्णस्य अनियमेन स्यात्तन्नेष्यते। कथमानन्त-र्येणैव विनियोगः स्यादित्येतदर्थमेतदारभ्यते। तस्माद् ग्रीष्मः क्षत्रियस्य, वर्षा वैश्यस्य, शरदुपक्रुष्टस्येति सिद्धम्।

बहुष्विति कस्मात्। "भूरिळा स्रुव इळा स्वरिळा वृध इळेति स्रुव-पूरमुन्नयेत्" इत्यत्र चत्वारो मन्त्राः पठिताः, स्रुवः पूरमुन्नतमिति[2] (?="स्रुवपूरमुन्नयेत्। अप्रियमप्रियं पूर्णतमम्" इति) च स्रुवबहुत्वमेव ज्ञाप्यते, न स्रुवाणां संख्यापरिमाणवचनम्। तत्रापि मन्त्रचतुष्टया-त्स्रुवानपि चतुरः[3] परिकल्प्य मन्त्राणां स्रुवाणां चानन्तर्याग(?=र्य-योगः)[4] कर्तव्य इत्येतदर्थं बहुष्विति वचनम्। तस्मात्प्रथमो मन्त्रः

(१) B², सत्यस्यापृथग्-B¹.
(२) B¹, उन्नतममति B².
(३) B¹; चतुर्हा B².
(४) चानंतर्याग B²; चानंतर्यांग B¹.

प्रथमस्य सूत्रस्य, द्वितीयो द्वितीयस्येति सिद्धम्। तथा "प्रतिदिशं [1] तपति (?="प्रतिदिशमुदकमुदुक्षन्नुदुक्षन्तीं वाचयति") इत्यत्रापि मन्त्राणां पञ्चत्वाद्दिशोऽपि पञ्चैव कल्पयितव्याः। अत्र मन्त्रलिङ्गविशेषाद्दिग्विशेषोऽपि भवति।

बहूनामिति वचनम्। संख्यया समानानामेवेत्यर्थः। आप्यायस्व चमसान् (?="आप्यायस्व समेतु ते सन्ते पयांसि समु यन्तु वाजा इति चमसान्") इत्यत्र मन्त्रद्वयमादेशो[2] बहवश्चमसा अन्वादेशाः, तस्मात्तत्र(?=तत्रा)समानत्वात्संख्या (?=संख्यया) न[3] भवत्यानन्तर्ययोगः। तेनोभाभ्यामृग्भ्यामेकैकश्चमस आप्यायितव्यः। इतरथा प्रथमयर्चा पञ्चानां चमसानामभिमर्शनं स्यात्, द्वितीयया शिष्टानां पञ्चानां चमसानाम्। तन्मा भूदिति बहूनामित्युच्यते।

अनुदेश इति वचनं नियमार्थम्। अनुदेश एवानन्तरस्य[4] योगः, नान्तर्हित इति। तेन "आप्यायस्व समेतु ते, सन्ते पयांसि समु यन्ति(?=न्तु) वाजा इति चमसानाद्योपाधान्" इत्यत्र

---

(१) प्रतिदिशं [1] तपतोत्यत्रापि B[1]; प्रतियदिशतयतोमिप्त्यत्रापि B[2].

(२) आदेशो B[2], आदेशौ B[1].

(३) न B[1]; omitted B[2].

(४) एवानंतरस्य B[1], एवानु तस्य B[2].

चमसव्यवधानादृचोश्चाद्योपाद्यानां चानन्तर्ययोगो न भवति। इतरथा पूर्वयाद्यानामभिमर्शनम्, उपाद्यानां द्वितीयया, एवमानन्तर्ययोगः कल्पयितव्यः स्यात्समत्वात्संख्यायाः। तन्मा भूदिति वचनम्॥

[ द्वे द्वे तु याज्यानुवाक्ये॥ ७॥ ]

अदृष्टादेशे नित्ये॥ ८॥

यत्र तु देवतानां बहुत्वं याज्यानुवाक्यानां चाल्पत्वम्। यथा"अग्निरग्निः पवमानः। अग्न आयूंषि पवसेऽग्ने पवस्व स्वपाः" इत्यत्राग्नेः प्रागुक्ते "अग्निर्मूर्धा भुवो यज्ञस्य" इत्येते आहृत्य "अग्निर्मूर्धा भुवो यज्ञस्याग्न आयूंषि,पवसेऽग्ने पवस्व स्वपाः" इत्येवं पाठः कर्तव्यः। इत्येवमानन्तर्ययोगः संख्यासामान्यात्सिध्यति। इतरथा "अग्न आयूंषि पवसे", "अग्ने पवस्व स्वपा." इत्येते एवोभयोरपि देवतयोः स्याताम्, तन्मा भूदिति।

[ अग्न्याधेयम्॥ ९॥ ]

कृत्तिकासु रोहिण्यां मृगशिरसि फल्गुनीषु विशाखयोरुत्तरयोः प्रोष्ठपदयोः॥ १०॥

---

(१) चोद्योपपाद्यानां B², चोद्योदपान्तीयानां च B¹.

फल्गुनीष्विति बहुवचनात् पूर्वे फल्गुन्यौ उत्तरे चेति नक्षत्रद्वयं गृह्यते ॥

## एतेषां कस्मिंश्चिद् वसन्ते पर्वणि ब्राह्मण आदधीत ॥ ११ ॥

एतेषां कस्मिंश्चिदित्यनुच्यमाने पूर्वनक्षत्रेषु वाशब्दाभावात्पुनः पुनरे[1] तेषु नक्षत्रेष्वाधानं स्यात्, तन्निवृत्त्यर्थम्। नैतदस्ति प्रयोजनम्। न गुणः[2] प्रधानमावर्त्तयतीति कालस्तु गुणकर्मणः(?)। आचार्यश्च ज्ञापयति न गुणः प्रधानमावर्त्तयतीति यदयम् "लेखां त्रिरुदकेनोपनयेत्" इत्यत्र त्रिग्रहणं करोति। पश्यत्याचार्यो न गुणः प्रधानमावर्तयति। इतरथा यदि गुणः प्रधानमावर्त्तयेत्त्रिरिति न वक्तव्यमेव। कथम्। मन्त्रत्रित्वादेव कर्मणस्त्रित्वं च सिध्यति हि[3]। तस्मादेतेषां कस्मिंश्चिद्वसन्त इत्यतिरिच्यत एव।

उच्यते। एवं तर्हि इदमस्य[4] प्रयोजनम्। इष्टानां नक्षत्राणामिष्टेष्वृतुषु केन चिदपि नक्षत्रेण पर्व न युज्यते ततः पर्व परित्यज्य नक्षत्रमेव ग्राह्यमित्येतदर्थं पुनरेतेषां कस्मिंश्चिदुच्यते। इत-

(१) पुनः पुनर् $B^2$ $B^3$; पुनर् $B^1$.
(२) $B^1$; न गुणः omitted in $B^2$ $B^3$.
(३) $B^1$; हि omitted in $B^2$ $B^3$.
(४) इदमस्य $B^3$; मदस्य $B^2$; म तस्य $B^1$

रथा पर्वनक्षत्रयोः संयोगो न भवतीति कृत्वा तस्मिन्संवत्सर आधानं नारभ्येत। अथवा नक्षत्रं परित्यज्य पर्वैव गृह्णीयात्। तन्मा भूदिति। शास्त्रान्तरेऽपि वचनम् "अन्यतरपरित्यागे पर्व परित्यजेत्" इति ॥

## ग्रीष्मवर्षाशरत्सु क्षत्रियवैश्योपकृष्टाः ॥ १२ ॥

निन्दितेन कर्मणा य उपजीवति तमुपकृष्टमित्याचक्षते ॥

## यस्मिन्कस्मिंश्चिदृतावादधीत ॥ १३ ॥[1]

आदिष्टेष्वृतुषु यस्मिन्कस्मिन्वा ऋतौ यः कश्चन वादधीत। पूर्वम् ऋतुनियमं[2] विधायेह पुनर्ऋतूनामनियमत्वं विधीयते। एवं[3] विधिविरोधाद्विकल्पः। यस्मिन्कस्मिंश्चिदृतावादधीतेति वाशब्दः[4] पठितव्यः।

आह। यथा पूर्वस्मिन्वाक्येऽधिकारादादधीरन्नित्यध्याह्रियते[5], तद्वदिहापि सिद्धे पुनरिहादधीतेति वचनमिदं विधानं

(१) Instead of this Sūtra (यस्मिन् ० दधीत B¹), B² B³ read यस्मिन् तद्धित as a part of the commentary.

(२) B¹, -नियमं वा B³; lacuna in B².

(३) एवं B³; पर्व-B¹; lacuna in B².

(४) वाशब्दः B² B³, पुनः वाशब्दः B¹.

(५) आह्रियते B¹.

अग्न आयूंषि पवसेऽग्ने पवस्व स्वपाः ॥ १९ ॥

स हव्यवाळमर्त्योऽग्निर्होता पुरोहित इति स्विष्टकृतः ॥ २० ॥

संयाज्ये इत्युक्ते सौविष्टकृती प्रतीयात् ॥ २१ ॥ ]

सर्वत्र देवतागमे नित्यानामपायः । याः स्विष्टकृतमन्तराज्यभागौ च ॥ २२ ॥

एतस्मिन्ननारभ्यमाणे आगतानां नित्यानां च देवतानां समुच्चयः स्यात् । अथवा नित्यानामप्याज्यभागादीनां सर्वासामपायः स्यात् । तन्मा भूदिति । याः स्विष्टकृतमन्तराज्यभागौ च तासामेवापायः कथं स्यादित्येतदर्थम् । देवतागम इत्यनुच्यमाने देवतानागमेऽपि[1] नित्यानामपायः स्यात् । यथा "मासं दर्शपूर्णमासाभ्याम्" इत्यत्र । एवं ब्रुवन्नाचार्यो ज्ञापयति तत्र दर्शपूर्णमासौ विकृती भवत इति । तेन[2] सिद्धं भवति । विकृतित्वाद्यजमानपदार्थानामूहः[3] कर्त्तव्यः ॥

(१) B³; देवतागमेऽपि B¹ B².

(२) तेन B² B³; तेन किं B¹.

(३) -पदार्थानामूहः B¹ B²; -पदानामूहः B³.

[ तास्तत्स्थाने ॥ २३ ॥ ]

एष समानजातिधर्मः ॥ २४ ॥

अस्योदाहरणम् "उशन्तस्त्वा निधीमहीत्येतां त्रिरन्वाहान्ताः सामिधेन्यः" इत्युक्ते प्राकृतीनां सामिधेनीनामपाय इति । एतस्मिन्ननुच्यमाने प्रत्याम्नायलक्षणेनैव सिद्धेऽपि पुनरेतद्वचनं नियमार्थम् । एष समानजातीयानाम् । समानसंज्ञकानामेवायं धर्म इति । शास्त्रान्तरे कृतसंज्ञकं तदन्येन समानसंज्ञकेनैव बाध्यते, नार्थाद्बाधनमिति । तस्मात् "प्रतिप्रस्थाता वाजिने तृतीयः" इत्यत्र पूर्वमर्थात्तृतीयस्याग्नीध्रस्य नापायः । आग्नीध्रस्तत्र चतुर्थो भवति । कुतः । नह्याग्नीध्रस्य शास्त्रान्तरकृता तृतीयसंज्ञा । तस्मादनपायः ॥

[ द्वितीयस्यां वृधन्वन्तौ । अग्निः पावकोऽग्निः शुचिः स नः पावक दीदिवोऽग्ने पावक रोचिषाग्निः शुचिव्रततम उदग्ने शुचयस्तव ॥ २५ ॥

स ह्यान्विश्वा अभियुजोऽग्निमीळे पुरोहितामिति संयाज्ये । तृतीयस्यां सामि-

---

(१) B² B³; तृतीयस्य सतोस्याग्नीध्रस्य B¹.

(२) B² B³; -कृतात् B¹.

विराजावित्युक्त एते प्रतीयात् ॥ ३१ ॥ ]

इति तिस्रः ॥ ३२ ॥

अनुच्यमाने एतासामिष्टीनां त्रित्वे सिद्धेऽपि पुनस्तिस्र इति वचनं प्रदर्शनार्थम् । यदा तिस्र इष्टयः क्रियन्ते तदानेन देवताविभागेनेति तिस्रः क्रियन्त इति । तेन "आद्योत्तमे वैव स्याताम् । आद्या वा" इत्यनयोरपि पक्षयोः तासां तिसृणामिष्टीनां या देवतास्ताः सर्वाः प्रथमायां प्रक्षेप्तव्या इति ।

अथवा इति तिस्र इति वचनं चतस्रोऽपि भवन्तीति प्रदर्शनार्थम् । यदा चतस्रः तदा प्रथमायां ये द्वे देवते तयोः पृथगिष्टिर्भवति । तथा सति द्वयोरपीष्ट्योः प्रथमायामुक्तं यत्तन्त्रं तदेव भवति । कुतः । देवतापेक्षत्वात्तन्त्रस्य ॥

[ आद्योत्तमे वैव स्याताम् ॥३३॥

आद्या वा ॥३४॥

तथा सति तस्यामेव धाय्ये विराजौ ॥३५॥ ]

---

(१) -मानेऽपि B[1].

(२) B[1] adds कर्थं०.

(३) B[1], देवताः B[3]; देवता B[2].

(४) इति B[1]·B[2]; इति omitted B[3].

(५) -ऽपि omitted B[2] B[3].

(६) B[1], आग्यचतस्रः B[2]; याज्याचतस्रः B[3].

## इतिमात्रे विकारे वैराजतन्त्रेति प्रतीयात् ॥३६॥

पूर्वस्मिन्वाक्ये धाय्ये विराजावित्युक्त्वा पुनरितिमात्रे विकार इत्युक्तत्वाद्धाय्ये विराजौ[1] विगृह्येते। यस्यामिष्टौ धाय्ये विराजावेव, विकारो[2]ऽन्यत्पौर्णमासं तन्त्रं सा वैराजतन्त्रेति। तस्माद् "वैराजं त्वग्निमन्थने" इत्यत्रापि धाय्ये विराजावेव विकारः[3], आज्यभागौ तु वार्त्रघ्नावेवेति सिद्धम्। इतरथार्थात्तन्त्रविकारः स्यात्, तन्मा भूदिति ॥

## आधानाद् द्वादशरात्रमजस्राः ॥३७॥

आहवनीयदक्षिणाग्न्योरुत्सर्गपक्षेऽपि द्वादशरात्रादूर्ध्वमेवोत्सृज्येत नार्वागित्येतदर्थमेतदारभ्यते ॥

## अत्यन्तं तु गतश्रियः ॥३८॥

गतश्रियो यजमानस्य यावज्जीवमनुत्सर्गः। या गता श्रीः[4] (?) स गतश्रीरित्युच्यते। त्रयो वै गतश्रियः। शुश्रुवान्ग्रामणी राजन्य इति ॥

( इति द्वितीये प्रथमा कण्डिका )

---

( १ ) B¹; विराजे B² B³.

( २ ) विकारो B¹; इतरो B³, इकरो B².

( ३ ) विकारा B¹; विकारे B³, विकारा B².

( ४ ) (यो गतश्रिय) यागता श्रीः (sic) B¹; य गता श्रीः B² B³.

अथ द्वितीये द्वितीया कण्डिका।

उत्सर्गेऽपराह्णे गार्हपत्यं प्रज्वल्य दक्षिणाग्निमानीय विट्कुलाद्वित्तवतो वैकयोनय इत्येके ध्रियमाणं वा प्रज्वल्यारणिमन्तं वा मथित्वा गार्हपत्यादाहवनीयं ज्वलन्तमुद्धरेत् ॥१॥

द्वादशरात्रमजस्रा इत्यस्मिन्नग्न्यधिकारादग्न्युत्सर्ग इति। गार्हपत्यं व्रजत्येवेति वचनात् गार्हपत्यस्यानुत्सर्गः।[1] एकयोनय इत्यस्मिन्पक्षे दक्षिणाग्नेरपि[2] गार्हपत्यादेवोद्धरणं कर्तव्यम्। ध्रियमाणं वा प्रज्वल्येत्यस्मिन्पक्षे न दक्षिणाग्नेरुत्सर्गः। उत्सर्ग आहवनीयस्यैव भवति।

विट्कुलादिति विड्गृहादित्यर्थः। यथा राजकुलमिति। एते आधानप्रभृतिविकल्पाः[3]। आधाने यथा दक्षिणाग्नेरुत्पादनं कृतं तथेहापि कर्तव्यमिति[4]।

---

(१) अन्य-B¹ B²; अन्याधेया-B³.
(२) B¹;-ग्नौ B² B³.
(३) विकल्पाः B¹ B²; विकल्पार्थः B³.
(४) B¹; तथेह निवर्त्तव्यमिति B² B³.

देवं त्वा देवेभ्यः श्रिया उद्धरामीत्युद्धरेत् ॥२॥

"ज्वलन्तमुद्धरेत्" इत्युद्धारे प्रकृतेऽपि पुनरिहोद्धरेदिति वचनमग्निहोत्रादन्यत्राप्युद्धरणे "गार्हपत्यं प्रज्वल्य" इत्येतदादि "ज्वलन्तमुद्धरेत्" इत्येतदन्तं विहितं सर्वममन्त्रकं कर्त्तव्यमित्येतदर्थम् ॥

[ उद्ध्रियमाण उद्धर पाप्मनो मा यदविद्वान् यच्च विद्वांश्चकार। अह्ना यदेनः कृतमस्ति किंचित्सर्वस्मान्मोद्धृतः पाहि तस्मादिति प्रणयेत् ॥ ३ ॥ ]

अमृताहुतिममृतायां जुहोम्यग्निं पृथिव्याममृतस्य योनौ। तयानन्तं काममहं जयानि प्रजापतिः प्रथमोऽयं जिगायाग्नावग्निः स्वाहेति निदध्यादादित्यमभिमुखः ॥ ४ ॥

आदित्यमभिमुख इति। यस्यां दिश्यादित्यस्तां दिशमभिमुख इत्यर्थः। इतरथा अङ्गारभेदः कर्तव्यः स्यात्। तन्मा भूदिति ॥

एवं प्रातर्व्युष्टायां तमेवाभिमुखः ॥५॥

प्रातरिति प्रातर्होम इत्यर्थः । तमेवाभिमुख इति । अत्र केचिद्वर्णयन्ति । तमेवादित्यमेवेति । यद्येवम्, एवं प्रातरित्येवंशब्दादेव सिध्यति । यथा गार्हपत्यं प्रज्वल्येत्ये[1] तदादि प्रातरपि[2] भवति, एवमित्यनुवर्णितत्वात् । तद्वदिहादित्याभिमुख्य[3]मपि सिध्यतीति ।

उच्यते । इहानुदितत्वादादित्यस्याभावः । अभावादादित्याभिमुखत्वमर्थान्निवर्तेत । तन्मा भूदि[4], दिशमभिमुखः कथं स्यादित्येतदर्थं तमेवाभिमुख इत्युच्यते । एतदेव ज्ञापकमादित्यमभिमुख इत्यत्रादि(?)ग्रहणमेवेति । कथम् । सिद्धेनासिद्धस्य[5] सिद्धिरिति ॥

## रात्र्या यदेन इति तु प्रणयेत् ॥ ६ ॥

अनुच्यमानेऽस्मिन्प्रातरग्निहोत्रस्यापि प्रकृतित्वान्न प्रकृतावूहो विद्यत इति प्रातरप्यह्ना यदेन इत्येवमेव स्यात् । तन्मा भूदिति ॥

---

(१) प्रज्वल्येत्ये-B³; प्रज्वलंत्य-B²; प्रज्वलत्ये-B¹.
(२) तदादि प्रातरपि B¹; तदपि B² B³.
(३)-ख्य-B¹ B²,-ख्य० B³.
(४) अभावः । अ-B² B³; अ-B¹.
(५) भूदिता B¹.
(६) सिद्धेनासिद्धस्य B¹

## अत ऊर्ध्वमाहिताग्निर्व्रतचार्या होमात् ॥७॥

इह व्रतचारीति व्रतमिति शास्त्रान्तरे सिद्धमिति अग्निहोत्रकाले विहितं यद्व्रतं तदागमयितव्यम्, वाग्यमनं भोजनवर्जनं मैथुनवर्ज(न)मित्येवमादि।

अथवा कालसामान्यात् "संध्यामासीत वाग्यतः" इत्यत्र सन्ध्यावेलायां विहितं वाग्यमनमिहापि भवतीति ॥

## अनुदितहोमी चोदयात् ॥ ८ ॥

यदि कदाचिदुदिते होमः कदाचिदनुदिते होम इतीच्छातो विकल्पः स्यात्, अनुदितहोमी (१=मो) नो(२=चो)दयादित्येवमवक्ष्यत्। यस्मादेवमनुक्त्वा अनुदितहोमी[3] चोदयादिति[4] मत्वर्थ इति(५=इनि)प्रत्ययं करोति, तस्मादादिविकल्प इति सिद्धम् ॥

## अस्तमिते होमः ॥ ९ ॥

---

(१) नो-B³; तो-B¹; त्तोorचो-(?) B².
(२) य-B¹; त-B² B³.
(३)-नुदितहोमी B² B³, उदितहोमी B¹.
(४) इति B² B³; इतीम B¹.
(५) त-B¹, य-B² B³.

यदि होममात्रस्यास्तमिते प्रवृत्तिरिष्टा स्यात् "प्रदोषं द्वय-ङ्गुलमात्रेऽग्नि[1] जुहुयात्" इत्यत्रैवास्तमिते होम इत्येवमवक्ष्यत्[2]। यस्मात्तत्रैवानुक्त्वा इहैवोच्यते तस्मात्[3] पर्युक्षणादि होमाङ्ग-भूतमस्तमित एव कर्त्तव्यम्। उत्तरत्रापि वक्ष्यति "तत्कालाश्चैव तद्गुणाः" इति॥

## [ नित्यमाचमनम्॥ १०॥ ]

## ऋतसत्याभ्यां त्वा पर्युक्षामीति जपित्वा पर्युक्षेत्त्रिस्त्रिरेकैकं पुनः पुनरुदक-मादाय॥ ११॥

जपित्वाग्रहणं त्रिरपि मन्त्रावृत्त्यर्थम्। सकृद्गृहीतेनाप्यु-दकेन त्रिरपि पर्युक्षणं कुर्यात्, तन्मा भूदिति पुनः पुनरुदकमि-त्युच्यते। एकस्यैवाग्नेस्त्रिरपि पर्युक्षणं समाप्य पुनर्द्वितीयस्याग्नेः प्रारभेत्(?=त) इत्येतदर्थमेकैकमित्युच्यते। इतरथानियमः स्यात्। तथा सति त्रिरप्यग्नीन्सकृत्पर्युक्ष्य द्वितीयमपि पर्यायं पुनरारभेत, तन्मा भूदिति॥

## आनन्तर्ये विकल्पः॥ १२॥

---

(१)-ग्नि-omitted B¹

(२) त-B¹

(३) तस्मात् B² B³; तत् B¹.

## अत ऊर्ध्वमाहिताग्निर्व्रतचार्या होमात् ॥७॥

इह व्रतचारीति व्रतमिति शास्त्रान्तरे सिद्धमिति अग्निहोत्रकाले विहितं यद्व्रतं तदागमयितव्यम् , वाग्यमनं भोजनवर्जनं मैथुनवर्ज(न)मित्येवमादि ।

अथवा कालसामान्यात् "संध्यामासीत वाग्यतः" इत्यत्र सन्ध्यावेलायां विहितं वाग्यमनमिहापि भवतीति ॥

## अनुदितहोमी चोदयात् ॥ ८ ॥

यदि कदाचिदुदिते होमः कदाचिदनुदिते होम इतीच्छातो विकल्पः स्यात्, अनुदितहोमी (?=मो) नो(?=चो)दयादित्येवमवक्ष्यत् । यस्मादेवमनुक्त्वा अनुदितहोमी[3] चोदयादिति[4] मत्वर्थ इति(?=इनि)प्रत्ययं करोति, तस्मादादिविकल्प इति सिद्धम् ॥

## अस्तामिते होमः ॥ ९ ॥

---

( १ ) नो-B[3]; तो-B[1]; त्तोorचो-(?) B[2].

( २ ) य-B[1]; त-B[2] B[3].

( ३ )-नुदितहोमी B[2] B[3]; उदितहोमी B[1].

( ४ ) इति B[2] B[3]; इतीम B[1].

( ५ ) त-B[1]; य-B[2] B[3].

यदि होममात्रस्यास्तमिते प्रवृत्तिरिष्टा स्यात् "प्रदीप्तां द्यङ्गुल्मात्रेऽमि[१]ञ्जुहुयात्" इत्यत्रैवास्तमिते होम इत्येवमवक्ष्यत्। यस्मात्त[२]त्रैवानुक्त्वा इहैवोच्यते तस्मात्[३] पर्युक्षणादि होमाङ्गभूतमस्तमित एव कर्त्तव्यम्। उत्तरत्रापि वक्ष्यति "तत्कालाश्चैव तद्गुणा." इति ॥

## [ नित्यमाचमनम् ॥ १० ॥ ]

## ऋतसत्याभ्यां त्वा पर्युक्षामीति जपित्वा पर्युक्षेत्त्रिस्त्रिरेकैकं पुनः पुनरुदकमादाय ॥ ११ ॥

जपित्वाग्रहणं त्रिरपि मन्त्रावृत्त्यर्थम्। सकृद्गृहीतेनाप्युदकेन त्रिरपि पर्युक्षणं कुर्यात्, तन्मा भूदिति पुनः पुनरुदकमित्युच्यते। एकस्यैवाग्नेस्त्रिरपि पर्युक्षणं समाप्य पुनर्द्वितीयस्याग्नेः प्रारमेत्(ऽ=त) इत्येतदर्थमेकैकमित्युच्यते। इतरथानियमः स्यात्। तथा सति त्रिरप्यग्नीन्सकृत्पर्युक्ष्य द्वितीयमपि पर्यायं पुनरारमेत, तन्मा भूदिति ॥

## आनन्तर्ये विकल्पः ॥ १२ ॥

(१)-मि-omitted B[1].

(२) त-B[1].

(३) तस्मात् B[2] B[3], तत् B[1].

विविधः कल्पो विकल्पः । आनन्तर्ये क्रम इत्यर्थः । यस्य कस्यचित्पर्युक्षणं कृत्वा प्रथमं यस्य कस्यचित् द्वितीयमितीच्छातः प्रवृत्तिरित्यर्थः ॥

[ दक्षिणं त्वेव प्रथमं विज्ञायते । पिता वा एषोऽग्नीनां यद्दक्षिणः । पुत्रो गार्हपत्यः । पौत्र आहवनीयः । तस्मादेवं पर्युक्षेत् ॥ १३ ॥

गार्हपत्यादविच्छिन्नामुदकधारां हरेत्तन्तुं तन्वन् रजसो भानुमन्विहीत्याहवनीयात् ॥ १४ ॥ ]

पश्चाद्गार्हपत्यस्योपविश्योदगङ्गारानपोहेत् सुहुतकृतः स्थ सुहुतं करिष्यथेति ॥ १५ ॥

पश्चाद्गार्हपत्यस्योपविश्येत्यत्र निरसनोपवेशने न भवतः । कुतः । कर्तुर्ऋत्विक्संज्ञाऽभावात् । तत्रैवत्स्यात् । "ऋत्विजामेक इतरं कालम्" इति तेनेह कर्तुर्ऋत्विक्संज्ञा स्यादिति ।

( १ )-मतीछातः B[1];-मिति चातः B[2] B[3].

( २ ) कुतः B[2] B[3], omitted B[1].

( ३ ) तेनेह B[2] B[3], तेन नेह B[1].

तन्नोपपद्यते । अन्येषु कर्मस्वृत्विग्भूतो यो यजमानः स इहापि कर्ता स्यादित्येतावन्मात्रमेव विधीयते, न कर्तुर्ऋत्विक्संज्ञा ।

आह । एवं चेत् "पश्चाद्गार्हपत्यस्य गृहपतिः" इत्यत्र गृहपतेर्निरसनोपवेशने न भवतः । कुतः । तस्यर्त्विक्संज्ञाभावादिति । उच्यते । नैष दोषः । न तु तत्रार्त्विज्यं कर्म करोति होतृकर्म तस्मिन्[1] तस्मिन्काले तस्य सर्वे भवन्ति (?) । तस्माददोषः ॥

तेष्वग्निहोत्रमधिश्रेयदधिश्रितमध्याधिश्रितमधिश्रितं हिङ् इति । इळायास्पदं घृतवच्चराचरं जातवेदो हविरिदं जुषस्व । ये ग्राम्याः पशवो विश्वरूपास्तेषां सप्तानां मयि पुष्टिरस्त्विति वा ॥ १६ ॥

अधिकारात्सिद्धेऽपि तेष्विति वचनं कृतं नियमार्थम् । तेष्वधिश्रयेदेव, नावज्वलनपर्यग्निकरणे तेभ्यः कुर्यादिति । तस्मात्ते गार्हपत्यात्[2] पृथक् कर्तव्ये । अथवा तेष्वपोद्धमात्रेऽधि-

(१) तस्मिन् B³; तस्मात् B¹; omitted B².

(२) गार्हपत्यात् B³; गार्हपत्याच्च सर्वे B²; गार्हपत्यस्येति B¹.

क्रियन्न समिधेष्विति[1] (?=धिश्रयेन्न समिद्धेष्विति)। तस्मादधिश्रितस्य पुनरर्थप्राप्तं वचनार्थमिदं[2] (?) कर्त्तव्यमिति।

अग्निहोत्रशब्दस्तु बहुष्वर्थेषु वर्त्तते। शालायां कर्मणि द्रव्येष्वग्निष्विति। शालायां तावदेव(?=वं), तत्राग्निहोत्रे[3] वर्तत इति। कर्माणि तावद्, यावज्जीवमग्निहोत्रं जुहुयादिति। अग्निषु तावद्, साग्निहोत्र आगत इति। द्रव्ये तावद्, अग्निहोत्रमधिश्रितं स्रवदभिमन्त्रयेतेति। इह द्रव्ये वर्त्तते। येनाग्निहोत्रं हूयते तद् द्रव्यमग्निहोत्रमिति॥

## न दध्याधिश्रयेत्॥ १७॥
## अधिश्रेयदित्येके॥ १८॥

दध्यधिश्रयेद्वेत्येतावता सिद्धे विकल्पे एवं गुरुसूत्रद्वयकरणं न्यायकृतोऽयं विकल्प इति प्रदर्शनार्थम्। कः पुनरत्र न्यायः? दध्यधिश्रितमग्निसंतापाद्रूपभेदं गच्छति। तस्माद्

(१)-धिक्रियन्न समिधेष्विति (with the marks---on-क्रिय-) B[1];-धिक्रियन्न समिधेष्विति B[3];-धिक्रियतन्न समिधेषिति B[2].

(२) वचनार्थमिदं B[1]; वचनामिदं corrected to वचनादिदं B[3]; वनादमिदं B[2].

(३) B[1]; तावत्त्राग्निहोत्रं B[3]; तावदेवत्राग्निहोत्र B[2].

द्रव्यान्तरप्राप्तिभयादनधिश्रयणम्। तथा असंस्कारादीति[1](ी=-दि) भयादधिश्रयणमित्येवं न्यायकृतो विकल्पइति। तेन तुल्यानां तण्डुलादीनामपि विभाषाधिश्रयणं कर्त्तव्यम्। तेऽप्यग्नितापाल्लाजा भवन्ति हि। तथा सोमस्यापि विभाषाधिश्रयणं कर्त्तव्यम्। दध्नोऽधिश्रयणपक्षेऽधिश्रित्य संस्कारमात्रमेव कृत्वा क्षिप्रमुद्वासनं[2] कर्त्तव्यम् ॥ २ ॥

इति द्वितीये द्वितीया कण्डिका।



(१) तथाऽसंस्कारादीति-$B^3$, तथोसंस्कारादिति-$B^2$, तथासस्कारादीनि $B^1$

(२) $B^2$ $B^1$, उद्वासनमात्रं $B^1$.

अथ द्वितीये तृतीया काण्डिका ।

## पयसा नित्यहोमः ॥ १ ॥

पयसा होम इत्येव सिद्धेऽपि नित्यग्रहणमुत्तरार्थम् । कथम् । यवाग्वादिभिरपि कामसंयोगं विनापि होमः कर्त्तव्य इत्येतदर्थं नित्यग्रहणम् । अथवान्यैर्द्रव्यैर्होतुकामोऽपि कंचित्कालमवश्यं पयसा जुहुयादेवेत्येतदर्थं नित्यग्रहणम् ॥

## यवागूरोदनो दधि सर्पिर्ग्रामकामान्नाद्यकामेन्द्रियकामतेजस्कामानाम् ॥ २ ॥

ग्रामकामान्नाद्यकामेत्यत्र समासं कृत्वा यवाग्वादीनामसमासं करोति । उभयथा नास्त्यक्षरलाभः ।

अथवा अन्यान्यपि द्रव्याणि विद्यन्त इति प्रदर्शनार्थम् । कानि पुनस्तानि ? प्रदर्शनार्थं गृह्यकर्मण्यपि ज्ञापयत्याचार्यः "तस्याग्निहोत्रेण प्रादुष्करणहोमकालौ व्याख्यातौ"(आश्व० गृ० १।७। ४-५) इति प्रकृत्य "हौम्यं च मांसवर्जम्" (आश्व० गृ० १।७।६) इति मांसप्रतिषेधं करोति, तेनान्यान्यपि विद्यन्त इति । कानि पुनस्तानि ?

पयो दधि यवागूश्च सर्पिरोदनतण्डुलाः[1] ।
सोमो मांसं तथा तैलमापस्तानि दशैव तु ॥

---

(१) -तण्डुलान् B¹.

इत्येवमादीनि ॥

## अधिश्रितमवज्वलयेत् ॥ ३ ॥

अधिश्रयेदिति विधानादेव सिद्धे पुनराधिश्रितमिति वचनं कालनियमार्थम् । कथमधिश्रितमात्रमेवावज्वलयेन्न कालान्तर इति । पर्यग्निकरणमुद्वासनवेलायां कर्त्तव्यमिति सिद्धम् । इदं च सिध्यति""अवज्वलनं कृत्वा पुनःपचनार्थं पुनःसमिन्धनं कुर्यादिति ॥

## अनधिश्रयं दध्यग्निष्टे तेजो मा हार्षीरिति ॥४॥

अवज्वलयेदिति । अत्रापिशब्दलोपो द्रष्टव्यः । यद्यपिशब्द-स्याध्याहरणं न स्यात् दध्नोऽधिश्रयणपक्षेऽवज्वलनं न[१] स्यात् । कथम् । अनधिश्रयं दधीति वचनात् । तच्च नेष्यते । इष्यते च दध्नोऽधिश्रयणपक्षेऽवज्वलनं कर्त्तव्यमित्येके संप्रत्य[२] (?=सं-प्रतिपन्नाः । अ-)स्मादपिशब्दस्याध्याहारः कर्त्तव्य एवेत्याह ।

यद्येवमधिश्रितमवज्वलयेदित्युक्त्वा दधि चेत्[३]यवक्ष्यत् । एवं लघुनापि दध्नोऽवज्वलनं नित्यं भवत्येव । यस्मादेवं नाह तस्मात् दध्नोऽधिश्रयणपक्षेऽवज्वलनं(? न) कर्त्तव्यमित्येके संप्रतिपन्नाः । नैतदस्ति । दधि चेत्येवमुच्यमानेऽपि दध्नोऽव-

(१) न B² B³; omitted B¹.

(२) संप्रत्य-B¹ B² B³.

(३) व इ-B² B³; वे-B¹.

ज्वलं नित्यं स्यादेव । किंतु तण्डुलादीनामधिश्रयणपक्षेऽवज्वलनं[1] स्यात् , तस्मादवज्वलनो यदि वचनात्[2] (?) । इष्यते च तेषामनधिश्रयणपक्षेऽवज्वलनम् । तस्माद् गुरुनिर्देश इति ॥

## स्रुवेण प्रतिषिञ्च्यान्न वा शान्तिरस्यमृत्तमसीति ॥५॥

इह[3] प्रतिषेधकाले आज्यस्य द्वयोर् (?+दर्भ)तरुणयो[4]-रवक्षेपणं कर्तव्यम् , न परिषेकः । तस्मादाज्यमग्निना तप्तमद्भिरवसिच्यमानं[5] पलार्धमुत्पत्य(?) विनश्यति[6] । तस्मान्न परिषेकः । "अपां वा एष ओषधीनां रसो यद् दर्भाः[7] सदसमेवं[8] ब्रह्म करोति" इति श्रुतेः । दर्भावक्षेपणे[9]ऽप्यप्रक्षेपणं[10]मपि भवतीति ।

---

( १ ) $B^1$; न added in $B^2 B^3$.

( २ ) $B^1$; तस्मादेव ज्वलनो यदि वचनात् $B^2$ $B^3$.

( ३ ) इह $B^2$ $B^3$; इहा-$B^1$.

( ४ ) द्वयोर्द्दिहवद्रुणयो-$B^2$; द्वयोर्द्दिह ( ईह deleted ) वं (व-corrected to वं-) रुणयो-$B^3$; द्वयो ( lacuna ) तरुणयो-$B^1$.

( ५ )-मानम् $B^2$ $B^3$;-मान$B^1$.

( ६ ) पलार्धमुत्पत्य विनश्यति $B^1$; उर्द्धमुत्पत्यलिनपश्यति (sic) $B^2$; उर्ध्वमुन्यत्पलिनपश्यति ( sic ) $B^3$.

( ७ ) यद्दर्भाः $B^2$ $B^3$, दर्भाः $B^1$.

( ८ ) सदस एव $B^1$.

( ९ ) दर्भावक्षेपणे $B^2$; दर्भाप-(प with marks of deletion) क्षेपणे $B^1$; दर्भविक्षेपणे $B^3$.

( १० )-प्यप्रक्षेपण-$B^1$, पुनः प्रेक्षण-$B^2$ $B^3$.

कौषीतकिनां वचनाच्च । "कुशतरुणैः मत्यय(?=प्रत्य-)स्यति यवागूं[1] श्रपयति शृतं वा यजुष्करोति" इति । यत् शास्त्रान्तरे विहितमस्माक-मविरुद्धं तच्च विकल्पेन ग्राह्यम् ॥

## तयोरव्यतिचारः ॥ ६ ॥

तयोः प्रतिषेकाप्रतिषेकयोरन्योन्यस्याव्यतिचार[2] इति । यद्यादौ सकृत्प्रतिषेकः कृतः पुनर्यावज्जीवं प्रतिषेकं[3] एव । अप्रति-षेकेऽपि तद्वदेवेति ।

अथैके ब्रुवते । तयोरवज्वलनप्रतिषेककयोरव्यतिचारं[4] इति । किमुक्तं भवति । प्रतिषेककर्तुकामोऽवज्वलनमपि न कुर्यादित्युक्तं भवति । तन्नोपपद्यते । यद्येवमिष्टं स्यादवज्वलन-स्यापि प्रतिषेकवदधिश्रितमवज्वलयेन्नवेति विकल्पमुक्त्वा पुन-स्तयोरव्यतिचारं इत्यवक्ष्यत् । तस्मान्नायमर्थः ॥

## पुनर्ज्वलता परिहरेत्त्रिरन्तारितं रक्षोऽ-न्तारिता अरातय इति ॥ ७ ॥

---

(१) यवागूं B[1]; यवाग्रं B[3]; पाग्रं B[2].

(२) अव्यतिचार B[3]; व्यभिचार B[1] B[2].

(३) प्रतिषेके B[1].

(४) B[3]; अव्यभिचार B[1] B[2].

समुदन्तं कर्षन्निवेदगुद्वासयेद्दिवे त्वान्तरिक्षाय त्वा पृथिव्यै त्वेति निदधत् ॥८॥

सुहुतकृतः स्थ सुहुतमकार्ष्टेत्यङ्गारानतिसृज्य स्रुक्स्रुवं प्रतितपेत् प्रत्युष्टं रक्षः प्रत्युष्टा अरातयो निष्टप्तं रक्षो निष्टप्ता अरातय इति ॥ ९ ॥

स्रुक्स्रुवमित्येकवद्भावनिर्देशादुभाभ्यां मन्त्राभ्यामुभयोः सहैव प्रतितपनमिति। इतरथा स्रुक्स्रुवयोर्द्वित्वान्मन्त्रयोश्चानन्तर्ययोगः स्यात्, तन्मा भूदिति ॥

उत्तरतः स्थाल्याः स्रुवमासाद्योमुन्नयानीत्यतिसर्जयीत ॥ १० ॥

स्रुवमासाद्येति वचनान्न स्रुवस्य सादनमिति। मतसात्स्रुवहस्त एवातिसर्जयीत ॥

आहिताग्निराचम्यापरेण वेदिमतिव्रज्य दक्षिणत उपविश्यैतच्छ्रुत्वोमुन्नयेत्यातिसृजेत् ॥ ११ ॥

---

(१) स्रुव-B¹; स्रुच-B² B³.

(२) स्रुव-B¹ B² B³.

दक्षिणत उत्तरतश्चेत्युक्तत्वादग्निगर्जनवारपश्चवणमेव (१) प्रवेष्टव्यम्। अथवाऽत्र ऊर्ध्वमाहिताग्निर्यत्रचार्यस्तेतस्मिन्नेव काले प्रपयोपवेशनं कर्तव्यम् ॥

अतिसृष्टो भूरिळा भुव इळा स्वरिळा
वृध इळेति स्रुवपूरमुन्नयेत् ॥ १२ ॥

विधानक्रमादेव सिद्धेऽप्यतिसृष्ट इति वचनमाहिताग्नौ प्रोषिते सति[२] तस्य पुत्रेण यान्तेवासिनात्मनैव वाऽतिसृष्ट एव भूत्वा कथमुन्नयेदित्येतदर्थम् ॥

[ अभियमाग्रियं पूर्णतमं योऽनुज्येष्ठमृ
द्धिमिच्छेत्पुत्राणाम् ॥ १३ ॥
योऽस्य पुत्रः प्रियः स्यात्तं प्रति पूर्णमु-
न्नयेत् ॥ १४ ॥ ]

स्थालीमभिमृश्य समिधं स्रुचं चाप्यधि
गार्हपत्यं हृत्वा प्राणसंमितामाहवनी-
यसमीपे कुशेषूपसाद्य जान्वाच्य समि-

(१) प्रवेष्टव्यः $B^{2}$.

(२) सति $B^{3}$, ति $B^{2}$, -ऽपि $B^{1}$.

(३) $B^{1}$, -वासी वा-$B^{3}$, -वासीना-$B^{2}$.

धमादध्याद्व्रजतां त्वाग्निज्योतिषं रात्रि-
मिष्टकामुपदधे स्वाहेति ॥ १५ ॥

केचिदयं(१) मन्त्रः पश्चस्रुवः(?) पश्चावत्तिनामिच्छन्ति। कुतः। अस्मिन्सूत्रे वाशब्दाभावान्नित्य एवेति। अध्यधीति समीपमित्यर्थः। "उपर्यध्यधसः सामीप्ये" (अष्टा० ८।१।७) इति व्याकरणे द्विर्भावविधानात् ॥

समिधमाधाय विद्युदसि विद्य मे पाप्मा-
मग्नौ श्रद्धेत्यप उपस्पृश्य प्रदीप्तां द्व्य-
ङ्गुलमात्रेऽभिजुहुयाद् भूर्भुवः स्वरो-
मग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति ॥१६॥

समिदाधानादनन्तरमेवापामुपस्पर्शनं कर्त्तव्यं कथं स्यादित्येतदर्थं समिधमाधायेत्युच्यते। इतरथा "होष्यन्नप(२) उपस्पृशेत्" इति श्रुतेः प्रदीप्तायां समिधि अपामुपस्पर्शनं स्यात्। तन्मा भूदिति।

एवमप्याधायेति सिद्धत्वात्समिधामिति वचनं जान्वाच्याधिकारानुवृत्त्यर्थम्। तस्माद् जान्वाच्य तत्रैवोपविष्टेन गार्हपत्यावेक्षणमपि कर्त्तव्यमिति सिद्धम्। यदि जान्वाच्याधिकारो न

---

(१) B¹; क्वचियं B³; lacuna in B².
(२) -न्नप B¹ B²; -न्न B³.

स्यात्तदाहुतिः[1] स्थितस्य प्राप्नोति अव्यक्तहोमधर्मेण। तच्च नेष्यते। तस्मादनुवर्तत एवेति मन्तव्यम् ॥

## पूर्वामाहुतिं हुत्वा कुशेषु सादयित्वा गार्हपत्यमवेक्षेत पशून्मे यच्छेति ॥१७॥

पूर्वामाहुतिं हुत्वेति वचनं नियमार्थम्। पूर्वे(? = र्वा)मेवा-हुतिं हुत्वा स्रुचः कुशेषु सादनं कुर्यान्नत्तरां(? = नोत्तरां) हुत्वेति। तस्माद्धस्तगताया एव स्रुचोऽपमार्जनं[2] कर्त्तव्यम् ॥

## अथोत्तरां तूष्णीं भूयसीमसंसृष्टां प्रागु-दगुत्तरतो वा ॥ १८ ॥

उत्तरामिति वचनमुभयोराहुत्योस्तुल्यत्वज्ञापनार्थम्। इतरथा द्वितीयाया आहुतेः प्रागुदगुत्तरतो वेति स्थानविधाना-त्स्थानसामान्यादियं स्विष्टकृदिति कृत्वोत्तरस्या विनाशेऽङ्ग-हविषो यदुक्तं तत्कुर्यात्। तन्नेष्यते। इष्यते च पुनरप्युन्नयनं कृत्वा जुहुयादिति ॥

---

(१) तदाहुतिः B[3]; आहुति-B[1]; आहुरिति B[2].

(२) पूर्वमेवा-B[1]; पूर्वामा-B[3]; पूर्वमा-B[2].

(३) कुर्यान्नत्तरा B[1]; कर्तव्यान्नितिस्तरा B[2], कुर्त्तपरिश्नि-त्तिर B[3].

(४) B[1] B[2], स्रुचोपामार्जनं B[3].

(५) B[1]; तुल्यत्वा-B[3]; तुल्यत्वं B[2]

## प्रजापतिं मनसा ध्यायात्तूष्णींहोमेषु सर्वत्र ॥१९॥

आह । ध्यानस्य मनःकरणत्वान्मनसेति न वक्तव्यम्, यथा "सर्वा दिशो ध्यायेच्छंसिष्यन्" इत्यत्र मनसेति नोच्यते । मनसेति वचनं प्रजापतिशब्दस्य ध्यानार्थम् । इतरथा प्रजापतेराकृत्यादीनां ध्यानं स्यात्तन्मा भूदिति । संप्रदाने चतुर्थीति चतुर्थ्या प्रजापतय इति । अत्रापि पुनः "स्वाहाकारान्तैः" इत्यत्रान्ते स्वाहाकारः, प्रजापतये स्वाहेति ।

सर्वत्रेति वचनम् "तूष्णीं द्वितीये उभयत्र" (आश्व० गृ० १।७।८) इत्यत्र "शूर्पपुटेनाभ्यात्मं तूष्णीं चतुर्थम्" (आश्व० गृ० १।५।१३) इत्येवमादिष्वपि प्रापणार्थम् ॥

## भूयिष्ठं स्रुचि शिष्ट्वा त्रिरनुप्रकम्प्याव-मृज्य कुशमूलेषु निमार्ष्टि पशुभ्यस्त्वेति ॥२०॥

भूयिष्ठं शिष्ट्वेति सिद्धेऽपि स्रुग्ग्रहणमधिकारार्थम् । अनुकम्पनं च मार्जनं[1] च स्रुच एव कर्तव्ये इति । मार्जने[2] क्रियमाणे यो हस्तमूले लेपस्तं कुशमूलेषु निमार्ष्टीति ॥

## तेषां दक्षिणत उत्ताना अङ्गुलीः करोति

(१) -नं $B^3$; -ना $B^2$; ने $B^1$.

(२) मार्जने $B^1$; अपामार्जने $B^3$; अपामार्जन $B^2$.

## प्राचीनावीती तूष्णीं स्वधा पितृभ्य इति वा । अपोऽवनिनीय ॥ २१ ॥

तेषामिति कुशमूलानामित्यर्थः[1] । दक्षिणतः प्राचीनावीती तास्वपोऽवनिनयति । तूष्णीमिति वचनं मन्त्रस्य विकल्पार्थम् । इतरथा तूष्णीमित्यनुच्यमाने वाशब्दः क्रियाविकल्पार्थं[2] स्यात् । तन्निवृत्त्यर्थं तूष्णींग्रहणम् ।

केचित्तु प्राचीनावीतित्वं स्वधा पितृभ्य इति मन्त्रं चाङ्गुलीनां निधाने कुर्वन्ति; पुनरपोऽवनिनीयेति शान्त्यर्थं[3], यज्ञोपवीतिना तस्मिन्नेव देशेऽपां निनयनं कर्त्तव्यमिति ।

केचित्तु ब्रुवते । अङ्गुलिनिधानात्पूर्वमेवापां निनयनं कृत्वा तस्मिन्नेव देशे पुनः प्राचीनावीतिना मन्त्रेणाङ्गुलिनिधानं कर्तव्यमिति । तेऽपोऽवनिनीयेत्येतत्पदद्वयमस्थाने[4]पठितं मन्यन्ते[5] ॥

## [ वृष्टिरसि वृश्च मे पाप्मानमप्सु श्रद्धेत्यप उपस्पृश्य ॥ २२ ॥ ]

---

(१) -र्थं B² B³, -र्थः B¹.
(२) चा- B² B³, था- B¹.
(३) -र्थं B² B³; -र्थं B¹.
(४) अस्थान- B² B³; आत्स्थान- B¹.
(५) मन्यन्ते B³; मन्यते B¹; मंत्यतः B².

## आहिताग्निरनुमन्त्रयेत ॥ २३ ॥

"क्षौमे वसानौ जायापती अग्निमादधीयाताम्" इत्याधानश्रुतौ द्विवचननिर्देशात्पत्नी चाहिताग्निरित्युच्यते । तस्माद्"आहिताग्निर्व्रतचारी" इत्येवमादिषु पत्न्यपि गृह्यते । तथापि यथासमन्त्रकं कर्माहिताग्निर्यत्र चोद्यते तत्पत्न्या न प्राप्नोति । कस्मात् । स्त्रियां मन्त्रजपोऽकृतत्वात् (१)हि(२)।

आह यद्येवम् "पत्न्या सह वाग्यतोऽग्नीन्" इत्यत्र पत्नीग्रहणं न(३) कर्त्तव्यम् । कथम् । नह्यपि(४) स्वामित्वादेव तत्र प्राप्नोतीति । उच्यते । नैष दोषः । तत्तत्रैव प्रयोजयति "अनशनमान्यस्माद्धोमकालात्" इति पत्न्या मा भूदिति ॥

## आधानमुक्त्वा तेन ऋषिणा तेन ब्रह्मणा तया देवतयाऽङ्गिरस्वद्ध्रुवासीदेति समिधम् ॥ २४ ॥

---

(१) चा-B[1] B[2]; वा-B[2].

(२) -जपोऽकृतत्वात् B[1]; -जहेष्कृतत्वात् B[3]; जहेय्यक्त(?)-तत्वा B[2].

(३) न B[1]; omitted in B[2] B[3].

(४) नह्यपि B[1]; नह्यापि B[2] B[3].

आधानमुक्त्वेति समिधाधानमुक्त्वेत्यर्थः। अनुमन्त्रयेतेति पूर्वमनुमन्त्रणं विधाय पुनराधानमुक्त्वेति वचनादाधानमन्त्रोऽनुमन्त्रणार्थ[1] एव। यद्याधानमन्त्रस्यानुमन्त्रणार्थ(?=र्थत्वं) न[2] स्यादाधानमुक्त्वानुमन्त्रयेत् तेन ऋपिणेत्येवमवक्ष्यत्। तस्मादाधानमन्त्रेण उत्तरेण चोभाभ्यां समिदनुमन्त्रणं भवति। कुतः। प्रदानार्थत्वात्स्वाहाकारस्य। इह प्रदानाभावाच्च। बहवस्तु[3] स्वाहाकारं कुर्वन्तो दृश्यन्ते॥

## ता अस्य सूद दोहस इति पूर्वामाहुतिम् ॥२५॥

आहुतिमिति[4] सिद्धेऽपि पूर्वा(?+मा)हुतिमिति वचनं नियमाथम्, पूर्वामेवाहुतिमनुमन्त्रयेत नोत्तरामिति। तस्मात्–"उपोत्थायोत्तराम्" इत्यत्रानुमन्त्रणाधिकारो निवर्तते॥

## उपोत्थायोत्तरां काङ्क्षेतेक्षमाणो भूर्भुवः स्वः सुप्रजाः प्रजाभिः स्यां सुवीरो वीरैः सुपोषः पोषैः। आग्नेयीभिश्च ॥ २६ ॥

---

(१) B¹;-र्थं B² B³.
(२)-र्थं न B¹ B²,-र्थं B³.
(३) बहवस्तु B¹; बहवश्च B² B³.
(४) B¹ B²; आहुतिमपि B³,

काङ्क्षेणेति (१) पाठः कर्त्तव्यः । कटाक्षेणेत्यर्थः । उत्तरामिति कालनिर्देशार्थमुच्यते । उत्तरामाहुतिमुपोत्थायेति । ईक्षमाण इत्यत्राग्निमीक्षमाण इति । कुतः । आग्नेयीभिश्चेत्यत्राग्नेयीनां करणविधानादग्निमुपतिष्ठत इति वाक्यशेषः ॥

अग्न आयूंषि पवस इति तिसृभिः ॥२७॥

इति द्वितीये तृतीया कण्डिका ।



(१) कांक्षेणेति $B^1$ $B^2$, कांक्षणेति $B^3$.

अथ द्वितीये चतुर्थी कण्डिका ।

## संवत्सरे संवत्सरे ॥ १ ॥

संवत्सरे संवत्सरे पर्यागते "अग्न आयूंषि" इत्येताभिस्तिसृभिरुपतिष्ठेत, पूर्वैर्मन्त्रैरिति ।

अथवा अपरा योजना । सुपोषः पोषैरित्येतदन्तं पूर्वं वाक्यम्, आग्नेयीभिश्चेत्येतदुत्तरं(? = -र-)सूत्राङ्गम् । तस्मादहरहर्भूर्भुवः स्वरित्येतेनैव यजुषोपस्थानं कर्त्तव्यम्, संवत्सरे संवत्सरे भूर्भुवः स्वरित्यनेन यजुषा चाग्न आयूंषीत्येताभिराग्नेयीभिश्चोपस्थानं कर्त्तव्यमिति । पूर्वस्यां तु योजनायां दोषः । चतुःपष्ट्यां यावत्य आग्नेय्यस्तावतीभिरहरहरुपस्थानं प्राप्नोति । कुतः । यथार्थग्रहणाभावात् । यथा "पावमानीरोप्य यथार्थम्", "यथार्थं मैत्रावरुण" इति ॥

## यवाग्वा पयसा वा स्वयं पर्वणि जुहुयात् ॥ २ ॥

---

(१) अथवापरयोजनासु $B^1$; अथवापरा योजना $B^2$ $B^3$ (-योजन $B^2$).

(२) पूर्वं वाक्यम् $B^3$; पूर्ववाक्यम् $B^1B^2$.

(३) चा- $B^2$ $B^3$, यजुषा चा- $B^1$.

काङ्क्षेणेति (१) पाठः कर्त्तव्यः । कटाक्षेणेत्यर्थः । उत्तरामिति कालनिर्देशार्थमुच्यते । उत्तरामाहुतिमुपोत्थायेति । ईक्षमाण इत्यत्राग्निमीक्षमाण इति । कुतः । आग्नेयीभिश्चेत्यत्राग्नेयीनां करणविधानादग्निमुपतिष्ठत इति वाक्यशेषः ॥

## अग्न आयूंषि पवस इति तिसृभिः ॥२७॥

इति द्वितीये तृतीया कण्डिका ।



(१) कांक्षेणेति B¹ B², कांक्षणेति B³.

अथ द्वितीये चतुर्थी कण्डिका ।

## संवत्सरे संवत्सरे ॥ १ ॥

संवत्सरे संवत्सरे पर्यागते "अग्न आयूंषि" इत्येताभिस्तिसृभिरुपतिष्ठेत, पूर्वैर्मन्त्रैरिति ।

अथवा अपरा योजना। सुपोषः पोषैरित्येतदन्तं पूर्वं वाक्यम्, आग्नेयीभिश्चेत्येतदुत्तरं(१=-र-)सूत्राङ्गम् । तस्मादहरहर्भूर्भुवः स्वरित्येतेनैव यजुषोपस्थानं कर्त्तव्यम्, संवत्सरे संवत्सरे भूर्भुवः स्वरित्यनेन यजुषा चाग्न आयूंषीत्येताभिराग्नेयीभिश्चोपस्थानं कर्त्तव्यमिति । पूर्वस्यां तु योजनायां दोषः । चतुःषष्टयां यावत्य आग्नेय्यस्तावतीभिरहरहरुपस्थानं प्राप्नोति । कुतः। यथार्थग्रहणाभावात् । यथा "पावमानीरोप्य यथार्थम्", "यथार्थं मैत्रावरुण" इति ॥

## यवाग्वा पयसा वा स्वयं पर्वणि जुहुयात् ॥ २ ॥

---

(१) अथवापरयोजनाश्च B[1]; अथवापरा योजना B[2] B[3] (-योजन B[2]).

(२) पूर्वं वाक्यम् B[3]; पूर्ववाक्यम् B[1]B[2].

(३) चा-B[2] B[3]; यजुषा वा- B[1].

आहिताग्निप्रकरणाल्लाघवार्थमिदमप्यपरं कर्माहिताग्नेरुच्यते। अमावास्यायां संनयतो[1] (?=स्वयं जुहतो) यवाग्वैव होमः। केचित्तु[2]। कुतः। अग्निहोत्र्यपि तदहः सांनाय्ये भवति[3] कुमारश्च पयसो न लभेरन्निति श्रुतेः(?)। केषांचिद्वचनाच्चे ॥

## ऋत्विजामेक इतरं कालम् ॥ ३ ॥

[4]ऋत्विगितरं कालमिति सिद्धेऽप्येकग्रहणं ऋत्विजां यः कश्चिद् जुहुयान्न केवलमध्वर्युरेवेति। एवं ब्रुवन् ज्ञापयति, अग्निहोत्रहवनमाध्वर्यवमिति। तस्मादग्निहोत्रभ्रेषे सति "यजुष्टो भुवः" इत्येतदेव प्रायश्चित्तं कर्त्तव्यमिति। अथवा एकग्रहणं(?=ण-)[5]प्रयोजनम्। य ऋत्विग् जुहोति तस्याग्निहोत्र ऋत्विग्संज्ञा मा भूदिति। तस्मादृत्विजां विहिते निरसनो-

---

(१) -यां संनयतो B[1]; -या लजयमृता (sic) B[2]; -यां स्वजयं हुतो B[3].

(२) होम. केचित्तु B[1]; होम इति केचित्तु B[2] B[3].

(३) B[1]; -होत्र्युसिरदह सात्राय दुर्ग भवति B[2] B[3] (B[2]: सांनाय for सात्राय).

(४) The Comm. is obviously very corrupt here.

(५) -ग्रहणं B[1] B[2] B[3].

पवेशने "पश्चाद्गार्हपत्यस्योपविश्योदगङ्गारानपोहेत्" इत्यत्र निरसनोपवेशने(?) न भवतः । अथवा ऋत्विजां स एव जुहुयात् न पुनरन्य इत्येकग्रहणं ब्रह्मणो निवृत्त्यर्थमिति मन्यन्ते। कुण्डपायिनामयने "मासमग्निहोत्रं जुहुति" इत्यत्र प्रतिषेधार्थमिति ॥

## [ अन्तेवासी वा ॥४॥ ]

## स्पृष्ट्वोदकमुदङ्ङावृत्य भक्षयेत् ॥५॥

## अपरयोर्वा हुत्वा ॥६॥

स्पृष्ट्वोदकमिति वृद्धिरपि -- दिश्येत्येतदेव (?="वृष्टिरसि वृश्च मे पाप्मानमप्सु श्रद्धेत्यप उपस्पृश्य" इत्येतदेव) पुनश्चोद्यते । एवं सिद्धस्य पुनरिह विधानम् "अपरयोर्वा हुत्वा" इति वा शब्दस्य भक्षकालविकल्पार्थम् । कथम् । स्पृष्ट्वोदकं वा अपरयोर्हुत्वा वेति ।

---

(१) गार्हपत्य lacuna द्वि-B[1]; गार्हपत्यवर्होदि-B[3]; गार्हस्थदेहो-B[2].

(२) ये added in B[1].

(३) B[2] B[3]; निरसनोपवेशने B[1]. Obviously निरसनोपवेशने is redundant here.

(४) ब्रह्मणो निवृत्त्यर्थमिति B[1]; विकल्पार्थमिति B[3]; निवृ(orऋ)त्यमिति B[2].

(५) वृद्धिरपि lacuna त्ये-B[1]; वृ इ पि । दिश्येत्ये B[3]; वृधिरपि-दिश्येत्ये-B[2].

(६) -व B[2] B[3];-वा B[1].

(७) वा B[2]B[3]; ता B[1].

इतरथा स्पृष्ट्वोदकमित्याक्रियमाणे वाशब्दोऽपरयोर्होमविकल्पार्थः स्यात। अपरयोर्हुत्वा अहुत्वा वेति। अपरयोर्होमो भवति वा न वेत्यर्थ इति। तन्मा भूदिति॥

[आयुषे त्वा प्राश्नामीति प्रथमम्। अन्नाद्याय त्वेत्युत्तरम्॥ ७॥]

अन्नाद्याय त्वेत्युत्तरमित्यत्रापि प्राश्नामीत्यर्थादनुषज्यते। अस्य ज्ञापकम्, महाव्रते "अन्येभ्योऽपि कामेभ्यः" इति प्रकृत्य[1] "न तृप्लिखामीति[2] ब्रूयात्" इति। अथवा विधानक्रमादेव सिद्धेऽपि "आयुषे त्वा प्राश्नामीति प्रथमम्। अन्नाद्याय त्वेत्युत्तरम्" इति वचनमुभयोस्तुल्यत्वज्ञापनार्थम्। तस्मात्प्रथमे दृष्टं प्राश्नामीत्ये-तदनन्तरेऽपि भवति॥

तूष्णीं समिधमाधायाग्नये गृहपतये स्वाहेति गार्हपत्ये॥ ८॥
नित्योत्तरा॥ ९॥

तूष्णीमिति मन्त्रप्रतिषेधार्थमुच्यते। आह। मन्त्रस्यानुपदे-शादेव मन्त्राभावः सिध्यतीति। उच्यते। एवमपि तूष्णीमिति

---

(१) प्रकृत्य B² B³; पुनरपि B¹.
(२) न तृप्लिखामीति B¹ B³; तूष्णीं स्यामिति B².

वचनं पूर्वस्याः समन्त्रकाया ये धर्मास्तेषामिहापि प्रापणार्थम् । तेन "जान्वाच्य० प्रदीप्तां द्व्यङ्गुलमात्रेऽभिजुहुयात्" इतीहापि प्राप्नुवन्ति ॥

तूष्णीं समिधमाधायाग्नये संवेशपतये स्वाहेति दक्षिणे । अग्नयेऽन्नादायान्नपतये स्वाहेति वा ॥१०॥

नित्योत्तरा ॥११॥

भक्षयित्वाऽप्यात्ममपः स्रुचा निनयते त्रिः सर्पदेवजनेभ्यः स्वाहेति ॥१२॥

आह । अपराग्निहोमः प्रधानभूतः । कस्मात्तयोर्होमविधिं पूर्वमनुक्त्वा भक्षणविधिः पूर्वमुच्यते । उच्यते । सत्यम् , किन्तु अपराग्निहोमविधिं पूर्वमुक्त्वा भक्षणे विधीयमाने स्थालीगतादपि शेषभक्षणं स्यात् । कुतः । स्थालीगतस्यापराग्निहोमः क्रियते । तच्च नेष्टम् । इष्यते च स्रुग्गतादेव भक्षणम् । तस्मादपराग्निहोमविधेः पूर्वमेव भक्षणविधिरिति ।

उच्यते । भक्षणं पूर्वं विहितम् । तेन[1] विधानक्रमादेव सिद्धेऽपि भक्षयित्वेति वचनमपरयोरहुत्वा भक्षितेऽपि भक्षणादन-

---

(१) पूर्वं विहितम् । तेन B¹; पूर्वविहितेन B² B³.

न्तरं निनयनमेव कर्त्तव्यम् , पश्चादपराग्निहोम इत्येतदर्थम् ॥

अथैनां कुशैः प्रक्षाल्य चतस्रः पूर्णाः प्रागुदीच्योर्निनयेदृतुभ्यः स्वाहा दिग्भ्यः स्वाहा सप्तऋषिभ्यः स्वाहेतरजनेभ्यः स्वाहेति ॥ १३ ॥

अथशब्दोऽप्यानन्तर्य एव । अस्मिन्नपि काले नापराग्निहोम इति । तथैवोत्तरत्र पञ्चमीं पष्ठीमित्यानन्तर्यार्थ एव । तस्मादपरयोरहुत्वा भक्षणपक्षे "प्रताप्यान्तर्वेदि निदध्यात्" इत्येतदन्तं कृत्वा ततोऽपराग्निहोमः कर्त्तव्य इति ॥

[पञ्चमीं कुशदेशे पृथिव्याममृतं जुहोम्यग्नये वैश्वानराय स्वाहेति । षष्ठीं पश्चाद्गार्हपत्यस्य प्राणममृते जुहोम्यमृतं प्राणे जुहोमि स्वाहेति ॥ १४ ॥ ]

[प्रताप्यान्तर्वेदि निदध्यात् ॥१५॥]

[ परिकर्मिणे वा प्रयच्छेत् ॥ १६ ॥ ]

[अग्रेणाहवनीयं परीत्य समिध आदध्यात्तिस्र उदङ्मुखस्तिष्ठन् ॥१७॥ ]

[ प्रथमां समन्त्राम् ॥ १८ ॥ ]

[आहवनीये दीदिहीति, गार्हपत्ये दीदायेति, दक्षिणे दीदिदायेति ॥ १९ ॥]

[उक्तं पर्युक्षणम् ॥ २० ॥]

ताभ्यां परिसमूहने ॥ २१ ॥

पूर्वे तु पर्युक्षणात् ॥ २२ ॥

ताभ्यां पर्युक्षणाभ्यां परिसमूहने व्याख्याते । यद्यपि पर्युक्षणेनातिदेशः परिसमूहनस्य[1], तथापि पर्युक्षणमन्त्रः परिसमूहने न प्राप्नोति । तस्मात्पर्युक्षणलैङ्गस्य[2] मन्त्रस्य परिसमूहने प्रयोगो नोपपद्यत इति । तत्रैतत्स्यात्परिसमूहमन्त्रस्योहः कर्त्तव्यः, परिसमूहामीति । तच्च नोपपद्यते । कुतः । न प्रकृतमूहः[3] । तस्मान्न मन्त्रवर्जं त्रिस्त्रिरेकैकमित्येतदादि पर्युक्षणातिदेशात्परिसमूहनेऽपि प्राप्नोति ।

अथैके परिसमूहने मन्त्रप्राप्तिभयात्ताभ्यामिति चतुर्थीनिर्देशं[4] मन्यन्ते । तत्र कोऽर्थः । ताभ्यां तदर्थ इति । एवं पर्युक्षणानति-

---

(१) $B^1$;–स्यापि $B^3$; स्यापे $B^2$.

(२) पर्युंत्तणलैंगस्य $B^3$; पर्युंत्तणर्लिगस्य $B^2$, परिसमूहनलिङ्गस्य $B^1$.

(३) $B^3$; प्रकृता ऊहः $B^1$; lacuna in $B^2$.

(४) $B^2$ $B^3$; चतुर्थी $B^1$

अथ द्वितीये पञ्चमी कण्डिका

प्रवत्स्यन्नग्नीन्प्रज्वल्याचम्यातिक्रम्योपतिष्ठते ॥१॥

अतिक्रम्येति वचनमत्र "प्रत्यगुदगाहवनीयात्" इति न[१] प्रत्यगुदङ्नियमो भवतीति प्रदर्शनार्थम् ॥

[आहवनीयं शंस्य पशून्मे पाहीति । गार्हपत्यं नर्य प्रजां मे पाहीति । दक्षिणमथर्व पितुं मे पाहीति । गार्हपत्याहवनीयावीक्षेतेमान्मे मित्रावरुणौ गृहान्गोपायतं युवम् । अविनष्टानविहृतान्पूषैनानभिरक्षत्वस्माकं पुनरायनादिति॥२॥]

यथेतं प्रत्येत्य प्रदक्षिणं पर्यन्नाहवनीयमुपतिष्ठते । मम नाम प्रथमं जातवेदः पिता माता च दधतुर्यदग्रे । तत्त्वं बिभृहि पुनरामैतोस्तवाहं नाम बिभराण्यम इति ॥ ३ ॥

---

( १ ) न B[1]; omitted in B[2] B[3].

**श्रत इति प्रतिदिशमग्नीनुपस्थाय ॥ ७ ॥**

अनुपस्थिताग्निश्चेत्प्रवासमित्येतावता सिद्धेऽप्यापद्येतेति विधानमापदूंगतस्यैव भवति, नेच्छातः प्रवृत्तिरिति । प्रतिदिशमिति वचनं(१) त्रयाणामग्नीनां मन्त्रस्यावृत्त्यर्थम् । उपस्थायेति साकाङ्क्षत्वाद्वाक्यस्योपस्थाय पुनर्मा प्रगामेत्येतदादि कुर्यात् । आरादग्निभ्य इत्येतन्न भवति । कुतः । अग्न्यभावादिति ॥

**[अपि पन्थामगन्महीति प्रत्येत्य ॥८॥]**

**समित्पाणिर्वाग्यतोऽग्नीञ्ज्वलतः श्रुत्वाभिक्रम्याहवनीयमीक्षेत । विश्वदानीमाभरन्तोऽनातुरेण मनसा । अग्ने मा ते प्रतिवेशा रिषाम । नमस्ते अस्तु मीळ्हुषे नमस्त उपसद्वने । अग्ने शुम्भस्व तन्वः सं मा रय्या सृजेति ॥ ९ ॥**

अति (१=अभि-)(२)क्रम्येत्युच्यमाने ज्वलतः श्रुत्वेति वचनाद्यत्र(३) स्थितेन ज्वलनं श्रुतं तत्रैव स्थित्वाहवनीयमीक्षेत ।

(१) वचन- B² B³; वचनात् B¹.
(२) अति- B¹ B² B³.
(३) वचनाद्र to श्रुतं B¹; वचनं श्रुतं B³; वचनं श्रुतं B².

भि सह आयच्छस्व स्वाहेति। दक्षिणेऽ-
यमग्निः पुरीष्यो रयिमान् पुष्टिवर्धनः।
अग्ने पुरीष्याभिद्युम्नमभि सह आयच्छस्व
स्वाहेति। गार्हपत्याहवनीयावीक्षेतेमा-
न्मे मित्रावरुणौ गृहानजूगुपतं युवम्।
अविनष्टानविहतान् पूषैनान् अभ्यराक्षी-
दस्माकं पुनरायनादिति ॥ १२ ॥ ]

[ यथेतं प्रत्येत्य ॥ १३ ॥ ]

[ प्रोष्य भूयो दशरात्राच्चतुर्गृहीतमाज्यं
जुहुयात्। मनो ज्योतिर्जुषतामाज्यं मे
विच्छिन्नं यज्ञं समिमं दधातु। या इष्टा
उषसो या अनिष्टास्ताः सन्तनोमि
हविषा घृतेन स्वाहेति ॥ १४ ॥ ]

अग्निहोत्राहोमे च ॥ १५ ॥

असमारूढेष्वग्निहोत्राहोमे चैतत्प्रायश्चित्तम्। समारूढेषु तु कालेऽग्निहोत्राहोमेऽन्वाधेयमेव प्रायश्चित्तम्। अग्निहोत्रहोमे

(१) B[1];-होत्रा B[2]B[3].

जान्वाच्येत्युक्तमिहापि होमेऽनुवर्तयन्ति ॥

प्रतिहोममेके ॥ १६ ॥

दीप्यमानेषु हूयमानेषु अहूयमानेषु यावन्त्यग्निहोत्राण्यतिक्रान्तानि प्रतिसंख्यार्यं[1] प्रतिजुहुयादिति ॥

परिसमुह्योदग्विहारादुपविश्य भूर्भुवः स्वरिति वाचं विसृजेत ॥ १७ ॥

विहारग्रहणम् त्वो (?=अकृत्वो[2])दगुपविश्येति सिद्धेऽपि विहारादिति वचनं विहाराद्बहिरुपवेशनार्थम् । इह भूर्भुवः स्वरिति वाचं विसृजेतेति मन्त्रं विदधद् ज्ञापयति "आरादग्निभ्यो वाचं विसृजेत" इत्यत्र तूष्णीमेव वाग्विसर्गो न मन्त्रकं[3] (?=समन्त्रक) इति ॥

[ गृहानीक्षेताप्यनाहिताग्निर्गृहा मा बिभीतोप वः स्वस्त्येवोऽस्मासु च प्रजायध्वं मा च वो गोपती रिषदिति प्रपद्ये-

---

( १ ) $B^1B^2$; प्रतिसंख्याय प्रतिसंख्याय$B^3$.

( २ ) -ग्रहणं त्वो-$B^1$;-ग्रहणं कृत्या-$B^3$;-ग्रहणं त्वत्या-$B^2$.

( ३ ) मंत्रक $B^1B^2B^3$.

त गृहानहं सुमनसः प्रपद्ये वीरघ्नो वीरवतः सुवीरान् । इरां वहन्तो घृतमुक्षमाणास्तेष्वहं सुमनाः संविशानीति शिवं शग्मं शंयोः शंयोरिति त्रिरनुवीक्षमाणः ॥ १८ ॥ ]

विदितमप्यलीकं न तदहर्ज्ञापयेयुः ॥१९॥

अनाहिताग्नेरप्ययमधिकारो वर्त्तते । अलीकमप्रियमित्यर्थः॥

विज्ञायतेऽभयं वोऽभयं मेऽस्त्वित्येवोपतिष्ठेत प्रवसन्प्रत्येत्याहरहर्वेति ॥२०॥

एवोपतिष्ठेते[1]त्यत्रैवेति वचनादुपस्थानाद्यं सर्वं लुप्यते । गृहादि( ?=नी )क्षेते[2]त्येतदादि[3] कर्त्तव्यमेव । कुतः । अनाहिताग्नेरदर्शनात् । अभयं व इति बहुवचनलिङ्गत्वान्मन्त्रस्य त्रयाणामग्नीनां सहैवोपस्थानं गार्हपत्यस्य पश्चात्स्थित्वा कर्त्तव्यम् । अहरहर्वेति प्रत्यह[4]मुपस्थानपक्षे यस्यां कस्यांचिद्वेलायामु-

( १ ) पमोपतिष्ठते-$B^3$; पसोपतिष्ठते-$B^2$; एवोवयिष्टे-$B^1$.
( २ ) गृहादिदेने-$B^2B^3$; गृहादिक्षेक्षे-$B^1$.
( ३ -तदादि $B^1$;-यदादि$B^2B^3$.
( ४ ) प्रत्यहमु-$B^1$; प्रत्यामृ-$B^2$; प्रात्यामु-$B^3$.

पस्थानं कर्त्तव्यमिति[1] "अनुपस्थिताग्निश्चेत्प्रवासमापद्येत"[2] इत्यनेन विधिनोपस्थाय[3] प्रयातस्य प्रत्यागमने "अभयं वोऽभयं मेऽस्तु" इति ( १ ए+ )तदेवं[4] प्रत्युपस्थानं भवति।

उपस्थिताग्नेस्तु केनचित्कारणेन गमने निवृत्तेऽपि पुनः प्रत्युपस्थानं कर्त्तव्यमेवेति। कौषीतकिनामप्युक्तम्।[5] "उपस्थाया-प्रसङ्गे यथा प्रोष्येति समारूढेषु न प्रवत्स्यन्नुपस्थानं[6] प्रत्युपस्थानं च"[7]। एतदपि कौषीतकिनां[8] वचनं "नारण्योरग्न्युपस्थानम्" इति॥

इति द्वितीये पञ्चमी कण्डिका।

---

(१) –मितो–B³; –मितीति B¹B².

(२) अनुपस्थिता० अद्येते–(sic) B¹; अनुपस्थिताद्येते–B²B³.

(३) विधि–B¹: विधा–B² B³.

(४) –ऽभयं वोभयं मेस्त्विति। तदेव B¹, –भयं वोभयमस्त्वीति तदेव B²B³

(५) B¹; कौषी ( शी B² ) तकीनामप्युक्तं उदस्थानं कर्तव्य मेवेति। कौषी ( शी B² ) तकीनामप्युक्तं उद्–B²B³.

(६) B¹; प्रवत्स्यदु–B²B³.

(७) च added B¹.

(८) B¹, नारण्यो–रुपस्थानम् B²; नारण्यो नरण्यवस्थानम् B³.

## अथ द्वितीये षष्ठी कण्डिका

## * अमावास्यायामपराह्णे पिण्डपितृयज्ञः ॥१॥

यदा श्वोभूते अमावास्यायां पर्व[1]शेषो भविष्यति तदा श्वोभूत एवापराह्णे कर्त्तव्यः । कुतः । "यदहश्चन्द्रमा न दृश्यते तदहर्वध्यात्"इति श्रुतेः । पूर्णपर्व[2]संनिकर्षाच्च । यदा पूर्वस्मिन्नहनि चन्द्रमा दृश्यते, श्वोभूते[3] पर्वशेषश्च न[4] विद्यते, तत्र किं कर्तव्यमिति। तथा सति यद्यपि चन्द्रमा दृश्यते, तथापि पूर्वेद्युरेव कर्त्तव्यः । कुतः । श्वः[5] पर्वशेषाभावात्पर्वणि कर्त्तव्यत्वाच्च ।

आह । अपराह्ण इत्यमावास्याया अपरो भागो गृह्यते, आहोस्वि[6]दन्यस्मिन्नहनि अमावास्या शिष्यते तस्याह्नोऽपरो भाग इति ? को विशेषः ? यद्यमावास्याया अपरो भागो गृह्यते तदामावास्यायामपराह्ण इति न ब्रूयात् । कुतः । यद्यमावास्याया अपरो भाग इष्टः स्यादमावास्याया अपराह्ण इति षष्ठ्या निर्देश-

---

(१) पर्व-$B^2B^3$; सर्व-$B^1$.
(२) पूर्णपर्व-$B^3$; पूर्व-$B^2$; पर्व-$B^1$.
(३) श्वोभूते $B^2B^3$; omitted $B^1$
(४) च न $B^1$; चा $B^2B^3$.
(५) श्वः $B^1$; omitted $B^2B^3$.
(६) -स्विद-$B^2B^3$;-स्मिन्न-$B^1$.

मकरिष्यन्न सप्तम्या। तस्मादमावास्या तिथिर्यस्मिन्नहनि शिष्यते तस्याह्नोऽपराह्ण इति ॥

## दक्षिणाग्नेरेकोल्मुकं प्राग्दक्षिणा प्रणयेद्ये रूपाणि प्रतिमुञ्चमाना असुराः सन्तः स्वधया चरन्ति। परापुरो निपुरो ये भरन्त्यग्निष्ठाल्लो(? = ष्टाल्लौँ)कात्प्रणुदात्वस्मादिति ॥ २ ॥

एकोल्मुकमित्यत्रैकग्रहणम् "तस्य पुरस्तादुल्मुकं हरन्ति"[1] इत्येवमादिष्वनेकोल्मुकहरणेऽपि न दोष इति प्रदर्शनार्थम्। अथवैकग्रहणं विशाखप्रतिषेधार्थम्। अथवैकतः प्रदीप्तस्यैव प्रणयनं नोभयतः प्रदीप्तस्येति ॥

## सर्वकर्माणि तां दिशम् ॥ ३ ॥

सर्वग्रहणं यत्र द्रव्यं[2] विधीयते चरुस्थाल्यादि तस्यापि तां दिशमभ्यग्रस्य विधानार्थम्[3] ॥

---

(१) तस्य पुरस्तादुल्मुकं हरन्ति $B^1$; तस्मादुल्मुकं हरति (=हति $B^2$) $B^2$ $B^3$.

(२) यत्र द्रव्यं $B^1$; य द्रव्य $B^2$; यद्रव्या $B^3$.

(३) $B^1$; तां दिशम् to-नार्थम् omitted in $B^2$ $B^3$.

उपसमाधायोभौ परिस्तीर्य दक्षिणाग्नेः प्रागुदक् प्रत्यगुदग्वैकैकशः पात्राणि सादयेच्चरुस्थालि(?=ली)शूर्पस्फ्योलूखलमुसलस्रुवध्रुव कृष्णाजिनसकृदाच्छिन्नेध्ममेक्षणकमण्डलून् ॥ ४ ॥

पात्राणीति चरुस्थाल्यादीनां पात्रसंज्ञा क्रियते "द्विवत्पात्राणामुत्सर्गः" इत्यत्र संज्ञार्थम् ॥

दक्षिणतोऽग्निष्ठमारुह्य चरुस्थालीं व्रीहीणां पूर्णां निमृजेत् ॥ ५ ॥

निमृजेदिति पूरयित्वा निकृन्तेदिति ॥

परिसन्नान्निदध्यात् ॥ ६ ॥

परिसन्नानी(?=नि)ति। निमृज्यमाने परिपतिताद(?=न)ग्निष्ठ एव दध्यादेव, एवं ब्रुवन् ज्ञापयति। अन्यस्मिन्पात्रान्तरे व्रीहयो मृज्यन्ते। तस्माद्दर्भाञ्छूर्पं च गृहीत्वा अग्निष्ठमारोहतीति सिद्धम् ॥

(१) B[1] B[2] B[3].

## कृष्णाजिन उलूखलं कृत्वेतरान्पत्न्य- वहन्यादविवेचम्[1] ॥ ७ ॥

विवेको नाम व्रीहितण्डुलानां पृथक्करणम् । तस्यार्था- त्प्राप्तस्य विवेकस्येह प्रतिषेधः क्रियते ॥

## अवहतान्त्सकृत्प्रक्षाल्य दक्षिणाग्नौ श्र- पयेत् ॥ ८ ॥

पुनरवहतानिति वचनं नियमार्थम् । अवहतानेव न फलीकृतानिति । फलीकरणस्याप्यर्थप्राप्तस्य प्रतिषेधः । दक्षिणाग्नेरे- कोल्मुकमित्यधिकृतेऽपि पुनर्दक्षिणाग्निग्रहणं गार्हपत्यनिवृत्त्य- र्थं तस्य श्रव(?=प)णार्थत्वात् ॥

## अवागतिप्रणीतात्स्फ्येन लेखामुल्लिखे- दपहता असुरा रक्षांसि वेदिषद इति ॥ ९ ॥

उल्लिखेदिति सिद्धेऽपि लेखामिति वचनं यथा दीर्घा व्यक्ता लेखा भवति तथोल्लिखेदिति । अथवा तिस्रो मा भूव- न्निति । कथम् ? पित्रादीनां त्रित्वात्पिण्डानां लेखास्तिस्रः स्यु-

---

(१) The Sūtra-pratika ends as-विवेकः B[1];-वेकां B[2] B[3].

स्तन्मा भूदिति। "तामभ्युक्ष्य" इति वचनमिति चेत्, तत्र तामिति जात्याख्या वीप्सार्थे वा भवति। तस्मात्त्रित्वप्रतिषेधार्थमेव लेखावचनम्॥

## तामभ्युक्ष्य सकृदाच्छिन्नैरवस्तीर्य आसादयेदभिघार्य स्थालीपाकम् ॥१०॥

दक्षिणाग्निसमीप आसादयेत्तस्मिन् हूयते। केचिदतिप्रणीते जुह्वति। ते लेखायां सादयन्ति। तन्न। दक्षिणाग्नावेव होमः[1]। कुतः। तस्य प्राधान्यात्। कथम्। "अग्निं मत्येयात्" इत्यत्राग्नेरविशेषनिर्देशात्। अविशेषवचने प्रधानतः संप्रत्यय इति। तत्र (?=यत्र) त्वतिप्रणीत इष्टः[2] स्यात्तत्र तस्य नामग्रहणं न[3](?) करोति, अप्राधान्यात्। यथा "अप्स्वितरावतिप्रणीते वा" इति। तच्च दक्षिणाग्नेः प्राधान्यं होमसंयोगादेव भवति, नान्यत् कारणम्। तस्मात्तस्यापि प्राग् होमान्नामग्रहणमेव क्रियते। अतिप्रणीतस्त्वसुरव्युदासार्थ[4] एवेति॥

---

(१) होमः B¹; होमाद्दा B³; होमद्दा B².

(२) तत्र त्वतिप्रणीत इष्टः B¹; तत्र त्यतिप्रणीतं इष्ट B²; तत्रत्यतिप्रणीते चेति तच्च दर्शित इष्ट B³.

(३) न B¹ B² B³.

(४) नाम- B² B³; नामा- B¹.

(५) B¹, -व्युदासाय B³, -व्युदासा B².

अथ मतम्। "अपहता असुरा रक्षांसि[1] वेदिषदः" इति लेखायाः वेदिसंस्कृत[3](?)त्वादवश्यमतिप्रणीतेनाप्याहवनीयस्थानीयेन भवितव्यम्। तस्मात्तस्मिन्नेव होम इति। तच्च नोपपद्यते। कथम्, इह वेदिग्रहणेन विहारो गृह्यते, न वेदिः। यथा "बहिर्वेदि यां दिशं व्रजेयुः" इत्यत्र वहिर्विहाराविति। तस्माद्दक्षिणाग्नावेव होमः कर्त्तव्यः॥

## आज्यं सर्पिरनुत्पूतं नवनीतं वोत्पूतं ध्रुवायामाज्यं कृत्वा दक्षिणतः। आञ्जनाभ्यञ्जनकशिपूपवर्हणानि॥११॥

इहानुत्पूतं सर्पिराज्यमिति[5] वचनादन्यत्रोत्पूतं[6] सर्पिराज्यमिति सिद्धम्।

नवनीतपक्षे यथा नवनीतत्वं न विहन्यते तथा विलापितस्यैवोत्पवनं कर्त्तव्यम्। तस्मान्नवनीतेनैवोपस्तरणाभिघारणे कर्त्तव्ये।

---

(१) अपहतासुरा B¹; अयतअसुरा B² B³.

(२) रक्षांसि B¹; रक्षांसि पिशाचा B² B³.

(३)-संस्कृत-B¹;-संस्तु-B², संस्तु-B³.

(४) B²B³, अवश्यमेव-B¹.

(५) सर्पिराज्यमिति added in B¹; सर्पिराज्य-added in B².

(६) B¹ B²; वचनादन्यत्रोत्पूतं omitted in B³.

आज्यधिकारे पुनर्ध्रुवायामाज्यं कृत्वेत्याज्यग्रहणं पूर्वमन्यस्मिन्पात्र उत्पवनं कृतमिति प्रदर्शनार्थम् । अथवाज्यग्रहणेऽक्रियमाणे नवनीतस्यान्तरत्वान्नवनीतस्यैव ध्रुवायां करणम् , न सर्पिषः, तन्निवृत्त्यर्थमाज्यग्रहणम् ।

आज्यग्रहणमपि दक्षिणतः करोति ॥

## प्राचीनावीतीध्ममुपसमाधाय मेक्षणेनाऽऽदायावदानसंपदा जुहुयात्सोमाय पितृमते स्वधा नमोऽग्नये कव्यवाहनाय स्वधा नम इति ॥ १२ ॥

अवदानसंपदा(१+दा)र्थ मेक्षणेन जुहुयादिति । अर्थाद्धस्तावदानम्[2] । गृह्यप्रकरण उक्तावदानसंपत् । कथम् । "बह्वोऽञ्जला उपस्तीर्य" ( आश्व० गृ० १।५।८ ) इति प्रकृत्य "प्रत्यभिघार्य हविरवद्यं च" ( आश्व० गृ० १।५।१० ) इत्येतदन्तम् । तथा "मध्यात्पूर्वार्धात्" ( आश्व० गृ० १।८।२१ ) इति प्रकृत्य "नात्र हवींषि प्रत्यभिघारयेत्" ( आश्व० गृ० १।८।२४ ) इत्येतदन्तम् ॥

---

( १ ) अवदानसंपदाया B², अवदा ( दा with marks of deletion ) दाय B¹, अवदाया B³

( २ ) हस्तावदानं B² B³, हस्तादान B¹,

स्वाहाकारेण वाग्निं पूर्वं यज्ञोपवीती ॥१३॥

अस्मिन्पक्षे स्वाहाकारेण वेति ब्रुवन् ज्ञापयति पूर्वस्मिन्पक्षे स्वाहाकारो न विद्यत इति। एतदेव ज्ञापकम् पूर्वस्मिन्पक्षे केनचिदन्येन तज्जातीयेन प्रदानार्थेन स्वाहाकारो बाधित इति। तस्मात्स्वाहाकारपक्षे स्वधा नम इत्यस्योद्धारः कर्त्तव्यः। आचार्यश्च ज्ञापयति स्वधा नम इत्ययं प्रदानार्थ इति यदयमाह पित्र्यायाम् "स्वधा नम इति वषट्कार" इति ॥

मेक्षणमनुप्रहृत्य प्राचीनावीती लेखां त्रिरुदकेनोपनयेच्छुन्धन्तां पितरः शुन्धन्तां पितामहाः शुन्धन्तां प्रपितामहा इति ॥ १४ ॥

पुनः प्राचीनावीतीतिवचनं स्वाहाकारपक्षेऽपि मेक्षणानुप्रहरणादूर्ध्वं प्राचीनावीतित्वार्थम्।

अत्र मन्त्रत्रित्वेऽपि त्रिरिति ब्रुवन् ज्ञापयति-न गुणः प्रधानमावर्त्तयतीति। तस्माद् "द्वीपे राज्ञो वरुणस्य" इत्येवमादयो यद्यपि मन्त्रा बहवस्तथापि सर्वैर्मन्त्रैः सकृदेवोपस्पर्शनमिति सिद्धम्। लेखायां त्रिषु स्थानेषु निनयनं कर्त्तव्यम् ॥

तस्यां पिण्डान्निपृणीयात्पराचीनपाणिः पित्रे पितामहाय प्रपितामहायैतत्तेऽसौ ये च त्वामत्रान्विति ॥ १५ ॥

असावित्यत्र संबुद्धया नाम निर्दिशेत् । —

लेखा निरुदकेनेति प्रकृतायामपि लेखायां पुनरिह तस्यामिति ब्रुवन् ज्ञापयति-"सकृदाच्छिन्नैरवस्तीर्य" इत्यत्र न लेखायामासादनमिति । यदि लेखायामासादनमिष्ट स्यात्ताभ्युक्ष्य सकृदाच्छिन्नैरवस्तीर्य तस्यामेवासादयेदित्येवमवक्ष्यत् । तस्मात् "ध्रुवायामाज्य कृत्वा दक्षिणत" इत्यत्रापि विहारस्य दक्षिणतो न लेखाया इति । तथा तामभ्युक्ष्येति लेखायां प्रकृतायामपि तामिति वचनं यत्राहते लेखाधिकारो नानुवर्तत इति ज्ञापनार्थमेव[1]॥

## तस्मै तस्मै य एषां प्रेताः स्युरिति गाणगारिः प्रत्यक्षमितरानर्चयेत्तदर्थत्वात् ॥ १६ ॥

इयं तु क्रिया पित्राद्यर्थं क्रियते। न च निपृतपिण्डो[2] जीवां-स्तर्पयति । तस्माद्गन्धमाल्यादिभिर्जीवान्[3] प्रत्यक्षमेवार्चयेदिति ॥

---

( १ ) - तिप्रत्यय - corrected to-त्यत्र स - in B¹,-तिप्रत्यय- B² B³

( २ ) B¹; निवृत- B² B³.

( ३ ) जीवान् ( followed by a space of ¾ of an inch ) B¹; जीवां काकवत् B², जवां कोष्ठवत् B³.

## सर्वेभ्य एव निपृणीयादिति तौल्वलिः क्रियागुणत्वात् ॥ १७ ॥

नैते भोक्तारः। एते तु क्रियायां गुणभूताः। क्रिया च प्रधाना।[1] एतेषां नामानि मन्त्रस्थानीयानि। न च मन्त्राणां प्राधान्यं भोक्तृत्वं वा। तस्माद् जीवेभ्योऽपि निपृणीयादिति॥

## अपि जीवान्त आ त्रिभ्यः प्रेतेभ्य एव निपृणीयादिति गौतमः क्रिया ह्यर्थकारिता ॥ १८ ॥

यस्य पित्रादयः सर्वे जीवन्ति सोऽप्या त्रिभ्यः परेभ्यः प्रेतेभ्य एव निपृणीयादिति गौतमः। किं कारणम्। एषार्थकारिता हि। कोऽसावर्थः? मरणम्। "प्रेतेभ्यो दद्यात्" इति श्रुतेः॥

## [ उपायविशेषो जीवमृतानाम् ॥ १९ ॥ ]

## न परेभ्योऽनधिकारात् ॥ २० ॥

अनेन गौतमपक्षः प्रतिषिध्यते। प्रपितामहात्परेभ्यो न निपृणीयादिति। कस्मात्। अनधिकारात्। कथमनधिकार-

---

(१) प्रधाना $B^1$; प्रधान $B^2$ $B^3$.

त्वम् । "पित्रे ददाति पितामहाय ददाति प्रपितामहाय ददाति" इति श्रुतेः । तस्मात्परेषामनधिकारः ॥

## न प्रत्यक्षम् ॥ २१ ॥

"प्रत्यक्षमितरान् यजेत्" इत्यस्य प्रतिषेधः क्रियते । इहाप्यनधिकारादित्यनुवर्तते " प्रेतेभ्यो ददाति" इति श्रुतेः । तस्माज्जीवा अधिकृता न भवन्तीति ॥

## न जीवेभ्यो निपृणीयात् ॥ २२ ॥

अनेन तौल्वलिपक्षस्य प्रतिषेधः क्रियते । इहाप्यनधिकारादेव ॥

## * न जीवान्तर्हितेभ्यः ॥ २३ ॥

यस्य पिता जीवति तेनोत्तराभ्यां मृताभ्यामपि न देयम् । यस्य पितामहो जीवति इतरौ मृतौ तेन पित्रे एव देयम् । यस्य प्रपितामहो जीवति इतरौ मृतौ तेन पूर्वाभ्यां द्वाभ्यामेव देयम् ॥

## जुहुयाज्जीवेभ्यः ॥ २४ ॥

अत्र वाशब्दलोपो द्रष्टव्यः । यथा [1]"योऽस्य पुत्रः प्रिय स्यात्त प्रति पूर्णमुन्नयेत्" इत्यत्रापि अविद्यमानोऽपि वाशब्दोऽध्याह्रियते, तद्वदिहापि वाशब्दोऽध्याहर्तव्यः । जुहु-

( १ ) योऽस्य to उन्नयेत् $B^1$, यो यस्यान् (-न $B^3$) एत् $B^2B^3$.

याद्वा जीवेभ्य इति । तस्मादयं पञ्चमो विकल्पः । जीवानां पिण्डदानमन्त्रेण स्वाहाकारान्तेन पाणिना जुहुयादिति ॥

## सर्वहुतं सर्वजीविनः ॥ २५ ॥

यस्य सर्वे जीवन्ति तेन सर्वे पिण्डा होतव्या इति । "जुहुयाज्जीवेभ्य" इत्यनेनैव सर्वजीविनोऽपि सिद्धे पुनर्वचनं जुहुयाज्जीवेभ्य इत्येतस्मिन् पक्षे जीवाय हुत्वा उत्तरस्मै मृताय पिण्डनिर्वापणं कर्त्तव्यमिति । इतरथा "न जीवान्तर्हितेभ्यः" इति वचनाज्जीवाय हुत्वाऽप्युत्तरस्मै न मृताय पिण्डदानं स्यात् । तन्मा भूदिति ॥

अथवा अपरा योजना —

"जुहुयाज्जीवेभ्य" इति जीवाय हुतत्वादेव यत्नादतेऽपि जीवान्तर्हिताय पिण्डदानं प्राप्नोति । कथम् । "न जीवान्तर्हितेभ्य" इत्ययं तु प्रतिषेधो जीवाय येन केनोपायेन दत्त्वा जीवान्तर्हिताय न दातव्यमित्येतदर्थम् । तस्माज्जीवायाग्नौ हुतत्वाज्जीवान्तर्हिताय न निवारणं (१)प्रतिषेध इति । अत्र सर्वहुतं सर्वजीविन इत्यस्यार्थः । पूर्वाभ्यां द्वाभ्यामाहुतिभ्यामेव सर्वहविर्होतव्यमिति । पिण्डप्रभृत्युत्तरं कर्म

---

(१) B[1]; -निवारणं B[2] B[3].
(२) निवारण B[2] B[3]; निवारण B[1].

लुप्यत इत्यर्थः । शास्त्रान्तरेऽपि वचनम् "होमान्तं जीवपितुरनारम्भो वा" इति । यस्यं द्वौ पितरौ पितामहौ प्रपितामहौ वा तस्मिन्नेकस्यैव पिण्डे द्वयोर्नाम निर्दिशेत् , पिण्डदानमन्त्रमप्यूहेत् । एतद्वां देवदत्तयज्ञदत्तौ ये च युवामत्रान्विति[2]। "उभावप्येकस्मिन् पितृमेदके (!=-मेदे)" (शा० श्रौ० सू० ४।४।६) इति[3] कौषीतकिनां वचनम् ॥

[ नामान्यविद्वांस्ततपितामहप्रपितामहेति ॥२६॥ ]

( इति द्वितीये षष्ठी कण्डिका )

---

( १ ) यस्य B[1], यस्या B[2] B[3].

( २ ) युवामत्रान्विति B[1], युवौ मत्रान्याति B[3], युवो मंत्रां स्वाति B[2].

( ३ ) एकस्मिन् पितृमेदक इति B[3], एकस्मिन् पित्रे मेदक इति B[2], एकस्मि० मेदक इति B[1].

अथ द्वितीये सप्तमी कण्डिका ।

**निपृतानतुमन्त्रयेतात्र पितरो मादयध्वं यथाभागमावृषायध्वमिति ॥ १ ॥**

निपृतानेव पिण्डाननुमन्त्रयेत् , न हुतानिति ॥

**सव्यावृदुदङ्ङावृत्य यथाशक्त्यप्राणन्नासित्वाऽभिपर्यावृत्यामीमदन्त पितरो यथाभागमावृषायीषतेति ॥ २ ॥**

इहाप्यनुमन्त्रयेतेत्यनुवर्तते । तस्मादभिपर्यावृत्यामीमदन्त पितर इत्यनुमन्त्रयेत पिण्डान् ॥

**[ चरोः प्राणभक्षं भक्षयेत् ॥ ३ ॥ ]**

**[ नित्यं निनयनम् ॥ ४ ॥ ]**

**असावभ्यङ्क्ष्वासावङ्क्ष्वेति पिण्डेष्वभ्यञ्जनाञ्जने ॥ ५ ॥**

दद्यादिति वाक्यशेषः, उत्तरत्र "वासो दद्यात्" इति दर्शनात् । पूर्वमुपकल्पनार्थं "आञ्जनाभ्यञ्जनकशिपूपबर्हणानि" अत्राञ्जनस्य पूर्वनिपातं कृत्वेह पुनर्दानकालेऽभ्यञ्जनाञ्जने

---

( १ ) पूर्वमुपकल्पनाय $B^2$, $B^3$; पूर्व उपकल्पनायाम् $B^1$.

इत्यस्य पूर्वनिपातं ( ?= तः ) क्रियते । तस्मादाञ्जनं वा पूर्वं दातव्यमभ्यञ्जनं वेति विकल्पः[1] ।

असावित्यत्र संबुद्ध्यां[2], नामनिर्देशे[3] ( ?=श )दाञ्जनाभ्यञ्जनयोरुपकल्पनकाले पृथङ्निहितयोः प्रदानं कर्तव्यम्, आहोस्विदपृथङ्निहितयोः प्रदानकाल एव त्रेधा विभज्य प्रदानं कर्तव्यमिति । उच्यते । पृथङ्निधानमिति । ज्ञापयत्याचार्यो यदयमिहाभ्यञ्जनाञ्जने इति द्विवचनं करोति । इतरथा अञ्जनाभ्यञ्जनानीत्येवमवक्ष्यत्[4] । कशिपूपबर्हिणामपि भवति । एवमेव शास्त्रान्तरे विहितम् ॥

वासो दद्याद्दशामूर्णास्तुकां वा पञ्चाशद्वर्षताया ऊर्ध्वं स्वलोमैतद्वः पितरो वासो मा नोऽतोऽन्यत्पितरो युङ्ध्वमिति[5] ॥८॥

---

( १ ) विकल्पः omitted in B¹

( २ ) सबुध्या- B¹ B³, सबुधा-B²

( ३ ) -र्देशे to गार्हप (Com on २ ७।१७) is omitted in B¹.

( ४ ) B², - नानित्येव वक्ष्यत् B³

( ५ ) Instead of this Sūtra B³ reads वासोऽन्यमिति; but B² reads वासोध्युमिति

वाससो[1] विकल्पेनापि न दानम्। यदि वाससोऽपि दानमिष्टं स्याद्, वासो दशामूर्णास्तुकां वा दद्यादिति दानशब्दमन्तेऽकरिष्यत्। यस्मादेवं न पठ्यते, तस्माद् दशोर्णास्तुके एव वासःकार्यं[3] कुरुत इति।

स्वल्लोमेति स्वग्रहणाद् यदा यजमानः स्वयमेव करोति तदैव लोमदानमिति।

त्रिष्वपि पिण्डेष्वेकमेव दशादानम्। कुतः। मन्त्रस्यैकत्वात्। सकृदेव मन्त्रः। इह एतद्वः पितर इति पितृशब्देन पितृपितामहप्रपितामहाख्योऽप्यभिधीयन्ते। पितृसंयोगात्तेषामपि पितृशब्दः॥

अथैनानुपतिष्ठेत नमो वः पितर इषे नमो वः पितर ऊर्जे नमो वः पितरः शुष्माय नमो वः पितरोऽघोराय नमो वः पितरो जीवाय नमो वः पितरो रसाय। स्वधा वः पितरो नमो वः

---

(१) वासो B³.
(२) या omitted in B³.
(३) यायः कार्य B³.

**पितरो नम एता युष्माकं पितर इमा अस्माकं जीवा वो जीवन्त इह सन्तः स्याम । मनोऽन्वाहुवामह इति च तिसृभिः ॥ ७ ॥**

एनान् पिण्डपितृनिति ।[1] तस्मात्पिण्डेपूपस्थानं कर्तव्यमिति ।

च तिसृभिरित्यत्र चकारग्रहणं कस्मात् । उच्यते । यत्र कल्पजैर्मन्त्रैः[2] सह ऋचामादिग्रहणं क्रियते तत्र तदादिग्रहणं कल्पजस्यैव[3] मन्त्रस्यावयवो न ऋगादिग्रहणमिति ज्ञापनार्थम् । यथा "वृष्टिद्यावा रीत्यापा शंभुवौ मयोभुवौ" इत्यत्र वृष्टिद्यावा रित्याव(?=रीत्यापे-)त्येतावानेव[4] मन्त्रः, न "वृष्टिद्यावारि (?=री)त्यापेषस्पती"(ऋ० ५।६८।५) इति श्री(?)ऋचा(?=च) आदिग्रहणम्[5] । तथान्यत्रापि । इह तु चकारग्रहणादृगादिग्रहणमेव भवति ॥

---

(१) पतान् पिडपितृनीति B² B³. The reading adopted by me is based on my own emendation.

(२) कल्पजैर् B²; कल्पनैर् B³.

(३) कल्पजस्यैव B²; कल्पनस्यैव B³.

(४) रित्यावत्ये B²; रित्यावेत्येत्ये B³.

(५) रित्यापेपस्पती इति श्रीऋचा आदिग्रहणं B³; रित्यावेशंस्य । तौ इतरथा ऋचा आदिग्रहणं B².

अथैनान् प्रवाहयेत् परेतन पितरः सोम्यासो गम्भीरेभिः पाथिभिः पूर्विणेभिः। दत्वायास्मभ्यं द्रविणे ह भद्रं रयिं च नः सर्ववीरं नियच्छतेति ॥ ८ ॥

न केनानिति[1] (?=अथैनानिति) वचनं पिण्डनिवृत्त्यर्थम्। तस्मादेतान् पितॄन् प्रवाहयेदिति ॥

अग्निं प्रत्येयादग्ने तमद्याश्वं न स्तोमैरिति ॥ ९ ॥

अग्निं प्रत्येयादिति ब्रुवन् ज्ञापयति पितॄणां प्रवाहणार्थं दक्षिणां दिशं गत इति। इहाविशेषेणाग्निग्रहणाद् दक्षिणाग्नेः प्राधान्याद्दक्षिणाग्निमेव प्रत्येयादिति। सदेक्षिग्नये (?) त्वविगणीते जुहुति ते ब्रुवतेस्मादग्नि[2](?) निर्गतस्तं प्रत्येयादिति दक्षिणाग्नेर्निर्गतस्त्वां[3] (?=त्वा)दक्षिणाग्निमेव प्रत्येयादिति स (?) दक्षिणाग्निप्राधान्येनेति[4] ॥

गार्हपत्यं यदन्तरिक्षं पृथिवीमुत द्यां

(१) न केनानिति B³; न केनानि B².

(२)-ग्नि B²; -ग्नी B³.

(३) -स्त्वा- B²; -स्वा-B³.

(४)-प्राधान्येनेति B²; प्रधान्येनेति B³.

यन्मातरं पितरं वा जिहिंसिम। आग्निर्मा तस्मादेनसो गार्हपत्यः प्रमुञ्चतु करोतु मामनेनसमिति ॥ १० ॥

इहापि प्रत्येयादित्यनुवर्त्तते। करोतु मामनेनसमित्येतदन्तो मन्त्रः ॥

वीरं मे दत्त पितर इति ॥ ११ ॥

वीरं मे दत्त इति याचनमन्त्रः ॥

पिण्डानां मध्यमं पत्नी प्राशयेदाधत्त पितरो गर्भं कुमारं पुष्करस्रजम्। यथाथमरपा असदिति ॥ १२ ॥

मध्यमं पिण्डमिति वक्तव्ये पिण्डानामिति बहुवचननिर्देशाद् यत्रैव त्रयाणां निवारणं(?) तत्रैव प्राशनमिति। पत्नी स्वयमेव मन्त्रं ब्रूयात्। पिण्डहोमे च प्रत्यक्षार्चने च यस्मै होमो यस्मै प्रत्यक्षार्चनं तस्य शुन्धन्तां पितर इत्येवंनिनयनमपि न कर्तव्यमिति। तथाञ्जनादीनां दानं न भवति। यदा तु गौतमपक्षेण परिभ्यो(?) निपरणं तदा जीवपितुः पितरः पितुः पितामहाः पितुः प्रपितामहा इत्येवं निनयनमन्त्राः कल्पयितव्याः। शुन्धन्तां पितर इत्यस्य तु निवृत्तिः ॥

[ अप्स्वितरौ ॥ १३ ॥ ]

[ अतिप्रणीते वा ॥ १४ ॥ ]

यस्य वागन्तुरन्नकाम्याभावः स प्राश्नीयात् ॥ १५ ॥

यस्य वागन्तुरित्यत्र आगन्तुरभिनय(?=-व)[1] इत्यर्थः ॥

महारोगेण वाभितप्तः प्राश्नीयादन्यतरां गतिं गच्छति ॥ १६ ॥

के,के महारोगाः ?

वातव्याधिः प्रमेहश्च कुष्ठश्चार्शभगन्दरः ।
अश्मरी मूढगर्भो वा भवत्युदरमष्टमम् ॥

इत्येते महारोगाः । पूर्वस्मिन् वाक्ये प्राश्नीयादिति सवचने[2] ( ?=वचने ) सत्यपि पुनरिह प्राश्नीयादिति वचनमागन्तुनिवृत्त्यर्थम् । इतरथा एकवाक्यनिर्दिष्टत्वादागन्तुना महारोगेणेत्यागन्त्वधिकारः स्यात् । तन्निवृत्त्यर्थम् । अन्यतरामिति रोगाभावाद्यनन्तरां[3] गतिं गच्छत्यरोगो भवतीत्यर्थः ॥

---

( १ ) अभिनय B³; अभिन B².

( २ ) सवचने B² B³.

( ३ ) B³; रोगाभावा भावादिनन्तरां B².

**एवमनाहिताग्निर्नित्ये श्रपयित्वातिप्रणीय जुहुयात् ॥ १७ ॥**

नित्ये औपासन[1] इत्यर्थः । एतस्मिन् श्रपयित्वा पुनरतिप्रणयनं कर्तव्यम्, अतिप्रणीते च होमः कर्तव्यः । अतिप्रणीय जुहुयादिति समानकर्तृकत्वाद् वाक्यस्य । अनाहिताग्नेस्तु गार्हपत्याभावाद् गार्हपत्यसंम्बन्धस्य[2] ( ? =-संबद्धस्य ) यदन्तरिक्षमित्यस्यापि मन्त्रस्याभावो भवति । नैयायिकास्तु मन्त्रस्य निवृत्तिं नेच्छन्ति । एत[3] ( ?=एते or एतन्- ) मन्त्रो यदौ[4] औपासने प्रयुज्यते गार्हपत्यशब्दस्थाने औपासनशब्दं कुर्वन्ति- "औपासनः प्रमुञ्चतु करोतु मामनेनसम्" इति ॥

**[ द्विवत्पात्राणामुत्सर्गः ॥ १८ ॥ ]**

**तृणं द्वितीयमुद्रिक्ते ॥ १९ ॥**

कमण्डलोस्तृणं द्वितीयं कुर्यात् । द्वादश पात्राणि सन्ति

---

(१) B², औपासनेऽग्नौ B³.
(२) - पत्यसंबन्धस्य B²; -पत्या संबन्धस्य B³.
(३) एत B² B³.
(४) यदा B²; य B³.

तानि। तेषामिध्ममेक्षणसकृदाच्छिन्नानामुपयोगः[1] पूर्वमेव कृतः। शिष्टानि नव पात्राणि, तेषामिहोत्साहः (?=-त्सर्गः) कर्तव्यः॥

इति द्वितीये सप्तमी कण्डिका।



(१) उपयोगः B¹ B³; उपयाग B².
(२) इहोत्साहः B¹B²; इहोत्सदः B³.

अथ द्वितीये अष्टमी कण्डिका

## दर्शपूर्णमासावारप्स्यमानोऽन्वारम्भणीयाम् ॥ १ ॥

पूर्णमासस्य पूर्वं प्रयोगः कर्त्तव्यः, पश्चाद्दर्शस्य। तथापि समासवशाद्दर्शस्य पूर्वनिपातनं करोति, न प्रयोगवशात्। यथा "अग्निमग्नीषोमाविति पौर्णमास्याम्", "अग्नीषोमयोः स्थान इन्द्राग्नी अमावास्यायाम्" इति। तस्मात्पूर्णमासस्य प्रथमं प्रयोग इति सिद्धम्।

दर्शपूर्णमासयोरुभयोरप्येककर्मत्वात् पूर्णमासे कृतान्वारम्भणीया उभयोरपि प्रयोजयति। तस्मात्पौर्णमास एव कृतान्वारम्भणीया दर्श इति।

अथ पौर्णमासातिदिष्टेष्विष्टिपशुसोमेषु नान्वारम्भणीया कर्त्तव्या। यदि तेष्वपीष्ट (१=ष्ट) स्यादन्वारम्भणीयामपि विधाय पश्चात्पौर्णमासेनेष्टयादीनामतिदेशमकरिष्यत्। यस्मादेवं न क्रियते तस्माद्विकृतिषु पौर्णमासातिदिष्टेष्वपि नान्वारम्भणीया कर्त्तव्या॥

## [ अग्नाविष्णू सरस्वती सरस्वानभिर्भगी ॥ २ ॥ ]

---

(१) विकृतिषु B[1]; वितीषु B[2] B[3].

[अग्नाविष्णू सजोषसे मा वर्धन्तु वां गिरः। द्युम्नैर्वाजेभिरागतम् ॥ अग्नाविष्णू महि धाम प्रियं वां वीथो घृतस्य गुह्या जुषाणा। दमे दमे सुष्टुतिर्वामियाना प्रति वां जिह्वा घृतमुच्चरण्यत् ॥ पावका नः सरस्वती पावीरवी कन्या चित्रायुः पीपिवांसं सरस्वतो दिव्यं सुपर्णं वायसं बृहन्तम्, आ सवं सवितुर्यथा स नो राधांस्याभरेति ॥ ३ ॥]

आधानाद्व्यामयावी यदि वार्था व्यथेरन्पुनराधेय इष्टिः ॥ ४ ॥

आधानान्निमित्तादित्यर्थः। आधानादूर्ध्वमा संवत्सरादामयावी यदि स्यात्। व्याधित इत्यर्थः। बोधायनेऽपि वचनम् "अग्नीनाधाय पापीयानभूव मम ज्यामाशिपि पुत्रो मृत इत्येतस्मिन्नेवैतस्काले दृष्टं भवतीति(?)"। पुत्रपशुहिरण्यादीनां विनाशो वा यदि स्यात्पुनराधेयं कर्त्तव्यम्। तस्मिन्पुनराधेये इष्टिर्वक्ष्यते। "एतस्मिन्नेव संवत्सरे निमित्तमुत्पन्न(?=निमित्त उत्पन्ने) भवति" इति भारद्वाजीये सूत्रे वचनम्। "यथा यावज्जीवं पुनराधेयस्य कालो नातीयात्" इत्याश्मरथ्यः। "संवत्सरे" इत्यालेखन इति ॥

**तस्यां प्रयाजानुयाजान्विभक्तिभि-
र्यजेत् ॥ ५ ॥**

तस्यामिति वचनं नियमार्थम् । तस्यां वक्ष्यमाणायां वेष्ट्यां[1] (?=यामेवेष्ट्यां) विभक्तियागादिर्वक्ष्यमाणो विधिः कथं स्यात्, न पुनराधेये निमित्ता स्यादवसानीयेष्ट्यादिष्विति[2] (?)।

हेता (?=एतद्) न ज्ञायते आख्यातविभक्तयः प्रयोक्तव्याः, आहोस्विन्नामविभक्तय इति । अथापि किं विभक्तिस्थानं कतमस्मिन्प्रयाजे कतमा विभक्तिरिति । अस्मिन्संशये निर्णयार्थं विभक्तिभिः सह प्रयाजानां पाठः क्रियते । समिधः समिधोऽग्नेऽग्न इत्येवमादि ।

**समिधः समिधोऽग्नेऽग्न आज्यस्य व्यन्तु । तनूनपादग्निमग्न आज्यस्य वेतु । इळो अग्निनाग्न आज्यस्य व्यन्तु । बर्हिरग्निरग्न आज्यस्य वेत्विति ॥ ६ ॥**

---

( १ ) वेष्ट्या B[1]; वेश्या B[2] B[3].

( २ ) न पुनराधेये निमित्तास्योदवसानीयेष्ट्यादिष्विति B[1]; न पुनराधेये निमित्ता स्या अवसानीयेष्ट्यादिष्विति B[2]; न पुनराधे निमित्ता स्यात् अवसानीयेष्ट्यादिष्विति B[3].

नराशंसोऽग्निमग्न इति नाराशंसानां द्वितीयः प्रयाजः कल्पयितव्यः। नराशंसो अग्निमग्न इति वा। उभयथा दृष्टत्वात्। कथम्। समिधः समिधोऽग्नेऽग्न इत्यत्र संधानं दृष्टम्, इळो अग्निनाग्न [1] इत्यत्र विवृत्तिर्दृष्टा [2]।

एवं चतुर्णां प्रयाजानां पाठादेव विभक्तियागे [3] सिद्धेऽपि "तस्यां प्रयाजानुयाजान्विभक्तिभिर्यजेत्" इत्यत्र पूर्ववाक्यनिर्देशप्रयोजनमुत्तमस्य प्रयाजस्यानुद्धारार्थम्। [4] कथम्। तस्यां प्रयाजानुयाजान्विभक्तिभिर्यजेन्नान्यो विकार इत्येवं सर्वेषु प्रयाजेषु पञ्चस्वपि विभक्तिषु प्राप्तासु चतुर्णामेव पाठनियमादुत्तमप्रयाजे विभक्तियागोऽपि सिद्धो भवतीति। तथोत्तमानुयाजेऽपि। शाखान्तरेऽपि वचनम् "स्वयं संपन्न उत्तमप्रयाजः स्वयं संपन्न उत्तमोऽनुयाजः" इति। तस्यां प्रयाजानुयाजान्विभक्तिभिर्यजेदित्यनुच्यमाने चतुर्णामेव पाठात्परिसंख्यानात्पञ्चमस्य निवृत्तिः स्यात्तन्मा भूदिति॥

---

(१) इळोग्नेनाग्न B² B³; इळोग्नेग्न B¹.

(२) विवृतिदृष्टा B²; विवृतिष्टा B³; विवृत्तैर्वादृष्टा B¹.

(३)-यागे B² B³;-योगे B¹.

(४)-निर्देशप्रयोजन-B²; -निर्देशाप्रयोजन-B³; -निर्देशाप्रयाजाना-B¹.

(५) B¹; -नुरुद्धारार्थं B²B³.

## समिधाग्निं दुवस्यतेह्यपु नवाणि त इत्याग्नेयावाज्यभागौ ॥ ७ ॥

आग्नेयावनुच्यमान इह वचनान्नित्यस्य सतः सोमस्यैवाग्नेय्यनुवाक्या स्यात्तन्मा भूदिति, कथं द्वितीयोऽप्यग्निरेव स्यादित्येतदर्थमेतदारभ्यते ।

आज्यभागावित्यनुच्यमाने उभयोरप्याग्नेयत्वादयमाज्यभागयोर्निर्देश इति न ज्ञायेत । तस्मादाज्यभागाविति वचनम् ॥

## [बुद्धिमदिन्दुमन्तावित्याचक्षते ॥८॥]

## तयाऽनुवृत्तिः ॥ ९ ॥

तथा सगुणयोरेवानुवृत्तिः ॥

## इज्या च[1] ॥ १० ॥

याज्यामध्यगतस्याग्निशब्दस्य गुणप्रयोगार्थमेतदुच्यते । ये३ यजामहेऽग्निं बुद्धिमन्तं जुषाणो अग्निर्[2]बुद्धिमानाज्यस्य वेतु ।

---

( १ ) "इज्या च" इत्यस्य स्थाने (अथवा तत्सूत्रमुद्दिश्य टिप्पणीरूपेण) "इज्या च ॥ आज्यभागयोरेवेज्या । न प्रधानस्य । तत्र गुणो नास्ति । अग्निरेव देवता ॥ इत्ययं पाठः B¹ पुस्तकमात्रसारो, विद्यते.

( २ ) जुषाणो अग्नि-B¹, जुषाणोग्नि-B² B³.

ये३ यजामहेऽग्निमिन्दुमन्तं जुषाणो अग्निरिन्दुमानाज्यस्य हविषो[2] वेत्विति ॥

## नित्यं पूर्वमनुग्राहाणिनः । अग्न आयूंषि पवस इत्युत्तरम् ॥ ११ ॥

नित्यं पूर्वमग्निगुणः-अग्निर्वृत्राणि जङ्घनदिति । अग्न आयूंषि पवस इत्युत्तरस्याग्नेः । ये तु निर्गुणाभ्यामग्निभ्या चोदयति (?=न्ति)[3] तैः सह प्रयोगे अनुवाक्यापक्ष इति मन्तव्यम् । केचिदध्वर्यवोऽस्मिन्नेव पक्षे उत्तरमाज्यभागं पवमानगुणेन चोदयन्ति-अग्नये[4] पवमानायेति । तैः सह प्रयोगे पवमानशब्देनैवानुवृत्तिरावाहनादि[5]-शब्देषु कर्त्तव्या । ये३ यजामहेऽग्नि (?=ग्निं) पवमानं जुषाणोऽग्निः पवमान आज्यस्य हविषो वेत्विति ॥

## नित्यस्तूत्तरे हविःशब्दः ॥ १२ ॥

इहाज्यभागयोरुभयोरप्याग्नेयत्वादुभयत्राग्निदेवत्यैव याज्या माप्नोति, न सौमिके (?) । न चाग्निदेवत्याया हविःशब्दो विद्यते

---

(१) जुषाणोऽग्नीरि-B² B³; जुषाणो अग्निमि-B¹

(२) हविषो omitted in B¹

(३) चोदयति B¹ B³, -यति B²

(४) अग्नये B³, पुनः अग्नये B¹; lacuna in B²

(५) आहवनादि-B² B³, आहवनादि-corrected to आवाहनादि-in B¹

याज्यायाम् । इष्यते च तत्रापि द्वितीया( १+या )मा[1]ग्नेया-( १=य्या )मपि[2] हविःशब्दः । त[3]स्मादेतदारभ्यते ।

नित्यग्रहणान्नित्य एव स्थाने नित्ययैव षष्ठ्या विभक्त्या कथं स्यादित्येतदर्थम् ।

आह । म ता उत्तर एव हविःशब्ददर्शनादिहोत्तरग्रहणेऽक्रियमाणेऽपि नित्यग्रहणादेवोत्तर एव भवति । तस्मादुत्तरग्रहणं न[4] कर्तव्यमिति । एवं सिद्धेऽप्युत्तर इति वचनं पूर्वस्मिन्बुद्धिमदिन्दुमत्पक्षेऽप्युत्तरे हविःशब्दः कथं स्यादित्येतदर्थम् ।

आज्यभागयोरग्न्योर्निर्गुणयोरपि प्रदानभेदात्पृथग् निगमनम् । प्रधानभूतस्याग्नेः प्राधान्यात्पृथग् निगमनं भवति ॥

[ आग्नेयं हविरधाह्यग्ने क्रतोर्भद्रस्याभिष्टे अद्य गीर्भिर्गृणन्त एभिर्नो अर्कैरग्ने तमद्याश्वं न स्तोमैरिति संयाज्ये । देवं

---

(१) द्वितीयामा-$B^2$ $B^3$, द्विया आ-$B^1$.

(२) आग्नेयामपि $B^1$ $B^2$ $B^3$.

(३)-शब्दास्त-$B^1$ $B^2$ $B^3$.

(४) न omitted in $B^1$.

बर्हिरग्नेर्वसुवने वसुधेयस्य वेतु, देवो
नराशंसोऽग्नौ वसुवने वसुधेयस्य
वेत्विति ॥ १३ ॥ ]

( इति द्वितीयेऽष्टमी कण्डिका )



अथ द्वितीये नवमी कण्डिका

## आग्रयणं व्रीहिश्यामाकयवानाम् ॥ १ ॥

आग्रयणमिति कस्यचित्कर्मणो नामधेयम् । तस्य नवप्राशनार्थत्वात् शरत्पाकत्वाच्च व्रीहीणां व्रीह्याग्रयणं शरदि भवतीत्यर्थासिद्धम् । तथा वर्षासु श्यामाकानाम् । वसन्ते यवानाम् । श्यामाकव्रीहियवानामिति वक्तव्ये व्रीहीणां पूर्वनिपातनं "यदा वर्षस्य तृप्तः स्यादथाग्रयणेन यजेत" इत्ययं विधिर्व्रीहीणामेव कथं स्यादित्येतदर्थम् ॥

## सस्यं नाश्नीयादग्निहोत्रमहुत्वा ॥ २ ॥

व्रीह्यादिभिरग्निहोत्रमहुत्वा नवं न प्राश्नीयादिति । नाश्नीयादग्निहोत्रमहुत्वेत्येतावता सिद्धेऽपि सस्यग्रहणं धान्यजातीयानां नवं प्राश्नीयादित्येतदर्थम् । नवैरग्निहोत्रहोमे क्रियमाणे आग्रयणप्राप्तिर्भवति । कथम् "अग्निहोत्रीं वैनानादयित्वा" इत्यत्र वाशब्दग्रहणात्पूर्वमन्यतराग्रयणविकल्प (१+:) सिद्ध इत्यवगम्यते । केचिद् ब्रुवते । न, नवैरग्निहोत्रहोमे नैवाग्रयणप्राप्तिः । अस्य तु वचनस्यान्योऽर्थः[1] । कथम् । आग्रयणकालेऽनागते नवभोक्तृ ( १=-क्तु- ) कामस्यैतद्विधानम् । पुनः काले आग्रयणेन यजेतेति ॥

---

( १ ) B¹; वचनस्यान्यर्थः B²; वचनस्यार्थः B³.

यदा वर्षस्य तृप्तः स्यादथाग्रयणेन यजेत ॥ ३ ॥

शरदि ऋतौ[1] वर्षस्य तृप्तेः[2]। तस्माच्छरद्याग्रयणं कर्तव्यमिति। अयं तु कालो व्रीहीणामेवेति पूर्वमुक्तम्। व्रीह्याग्रयणस्यैव कालं विदधद् ज्ञापयति इतरयोरनित्यत्वम्। कथम्[3]। "अपि वा क्रिया यवेषु" इति(१=ती)हैव यवाग्रयणं स्यान्नित्यत्वं (१=-यणस्यानित्यत्वं) विधास्यति[4]। गृह्ये च श्यामाकाग्रयणस्यानित्यत्वम्[5]। कथं गृह्ये च। यदयं व्रीहियवानामेव देवतासंबन्धान्मन्त्रान्विदधाति "सजूर्ऋतुभिः" (आश्व० गृ० सू० २।२।४) इत्येवमादीन्। न च तत्र सोमसम्बन्धो मन्त्रः पठ्यते। तस्माच्छ्यामाकाग्रयणस्यानित्यत्वम्। अध्वर्यूणामनुपदग्रन्थेऽपि[6] वचनम्—"श्यामाकैर्यजेत सकृदेव श्यामाकैर्यजेत[7]" इत्येवमादिविकल्पः सिद्ध इति।

---

(१) शरदितो B[1]; शरदि तु B[2] B[3].

(२) तृप्तेस् B[2]B[3]; तृप्ते B[1].

(३) कथम् B[3]; omitted in B[1] B[2].

(४) अपि वा क्रिया यवेष्विति हैव यवाग्रयणं स्यान्नित्यत्वं विधास्यति B[1], कस्यानित्यत्वं B[2]; स्यान्नित्यत्वं B[3].

(५) गृह्ये च श्यामाकाग्रयणस्यानित्यत्वं B[1]; omitted in B[2] B[3].

(६) B[1] B[3]; अणिपदं ग्रंथे B[2].

(७) सकृदेव श्यामाकैर्यजेत added in B[2] B[3].

आह। शरदि यजेतेत्येतावता सिद्धेऽपि यदा वर्षस्य तृप्तः स्यादित्येवं कस्मादुच्यत इति। उच्यते। शरद्यपि वर्षस्य तृप्तौ सत्यामेवाग्रयणं न (१) कर्त्तव्यमित्येतदर्थम्। यदा वर्षस्य तृप्त इत्येतावतैव सिद्धिः स्यादित्यह(२) निर्देशः क्रियते (१)। स्याद्। भवितुमर्हतीत्यर्थः। तस्मादलब्धवृष्टिके संवत्सरे आग्रयणं (१+न) कर्त्तव्यमिति।

आग्रयणाधिकारेऽप्यथाग्रयणेन यजेतेति पुनर्वचनमग्निहोत्रहोमविकल्पोऽप्यस्मिन्नेव काले कथं स्यादित्येतदर्थम्। इतरथा यजेतेति यजतिशब्दचोदितत्वादिष्टेरेवायं कालः स्यान्नाग्निहोत्रहोमस्य। कथम्। जुहोतिशब्दचोदितत्वात्। तस्मा भूदिति। एके ब्रुवते। इहाग्रमसाग्रहणं सत्यं नाश्नीयात्सो''''पूर्वोत्तमाग्रयणं(३) (१) न भवतीति ज्ञापनार्थमिति॥

[ अपि हि देवा आहुस्तृप्तो नूनं वर्षस्याग्रयणेन हि यजत इति। ] अग्निहोत्रीं वैनानादयित्वा तस्याः पयसा जुहुयात्॥ ४॥

---

(१) यदा B[2] B[3]; यथा B[1].

(२) इत्यह B[2] B[3]; इत्याहB[1].

(३) सो-( lacuna ) पूर्वोत्तमाग्रयणं B[1]; पूर्वोत्तमाग्रयण B[2]; अग्नित्पूर्वोत्तमाग्रयणं B[3].

वाशब्दस्योक्तं प्रयोजनम् । सस्यं नाश्नीयादग्निहोत्रमहुत्वेति नवैरग्निहोत्रस्याग्रयणार्थत्वमिति[1] । एके ब्रुवते । यजेतेति वचनादिष्ट्यां प्राप्तायां पुनरेतद्[2] विधानं कर्त्तव्यमिति वाशब्दः क्रियत इति । एतान्[3] (१=एनान्) सस्यभूतान्संजातफलानित्यर्थः। आग्रयणकाल आगते यदा सस्यनिष्पत्तिर्न भवति तदा कालातिपातभयात्कर्तव्यमेतदिति । शास्त्रान्तरेऽपि वचनम् "तेषामलाभे सस्यानादयेत्" इति ॥

[ अपि वा क्रिया यवेषु ॥ ५ ॥ ]

[ इष्टिस्तु राज्ञः ॥ ६ ॥ ]

[ सर्वेषां चैके ॥ ७ ॥ ]

श्यामाकेष्ट्यां सौम्यश्चरुः ॥ ८ ॥

चरुग्रहणं याज्यानुवाक्यानियमार्थम् । कथम् । "सोम यास्ते", 'या ते धामानि" इत्येते याज्यानुवाक्ये सोमस्य चरोरेव स्यातां नान्यस्मिन्हविषीति । यत्रान्यद्धविः सोमस्य तत्र "त्वं सोम प्रचिकितः" इत्यविशेषेण प्रायणीयायामुक्ते भवत इति ॥

---

(१) B¹ B² (but सर्वै- for नवै- and -होत्रहोमस्या- for होत्रस्या- in B²), सस्यं नाश्नीयादग्निहोत्रहोमस्याग्रयणार्थत्वमिति B³.

(२) एतद् B² B³; एतद्वा B¹.

(३) एतान् (not एनान्) B¹ B² B³.

[ सोम यास्ते मयोभुवो या ते धामानि दिवि या पृथिव्यामिति ] अवान्तरेळाया नित्यं जपमुक्त्वा सव्ये पाणौ कृत्वेतरेणाभिमृशेत् । प्रजापतये त्वा ग्रहं गृह्णामि मह्यं श्रियै मह्यं यशसे मह्यमन्नाद्याय ॥ ९ ॥

अवान्तरेळाया जपमुक्त्वेत्येतावता सिद्धेऽपि नित्यग्रहणम्, यस्य यस्य यो यो मन्त्रो यत्र यत्र विद्यते स (१+स) तं तं मन्त्रं तत्र तत्रोक्त्वा सव्ये पाणौ कथं कुर्यादिति, यत्र यत्र मन्त्रो (१) विद्यते स तूष्णीमेव सव्ये पाणौ कृत्वेतरेणाभिमृशेदित्येतदर्थं च । इतरथा "एतेन भक्षिणो भक्षान्सर्वत्र नवभोजने" इत्यत्रैतेनातिदेशाद्‌ होतुरन्येषामप्यवान्तरेळामन्त्रजपः प्राप्नोति । तन्मा भूदिति नित्यग्रहणम् ॥

[ भद्रान्नः श्रेयः समनैष्ट देवास्त्वयावसेन समशीमहि त्वा । स नो मयोभूः पितवाविशेह शं नो भव द्विपदे शं चतुष्पद इति ] प्राश्याऽऽचम्य नाभि-

(१) B¹; इत्येतेनातिदेशेन B³; lacuna in B².

मालभेतामोऽसि प्राण तदृतं ब्रवीम्यमासि सर्वानसि प्रविष्टः । स मे जरां रोगमपनुद्य शरीरादमा म एधि मा मृधाम इन्द्रेति ॥ १० ॥

प्राशयेत्यनुच्यमाने विधानक्रमान्नाभ्यालम्भनं कृत्वा पुनः प्राशनं स्यात्तन्निवृत्त्यर्थं प्राशयेतिवचनम् ।

आचम्यग्रहणं यत्राचमनं तत्रैवोपविश्य नाभ्यालम्भनं कर्त्तव्यमित्येतदर्थं तत् । तस्मात्प्राशित्रप्राशने तु ब्रह्मणो नाभ्यालम्भनं विहारं प्रपन्नस्यैव भवतीति सिद्धम् ॥

एतेन भक्षिणो भक्षान्सर्वत्र नवभोजने ॥ ११ ॥

भक्षिण इति वचनं सर्वेषां प्राप्त्यर्थम् । इतरथा होतुरेव स्यात्तन्मा भूदिति । सर्वत्रेत्येतच्च "आग्रयणकाले नवानां सवनीयान्निर्वपेयुः" इत्यत्रापि प्रापणार्थम् । इतरथा प्रकरणान्तरेऽपीष्ट्यामग्निहोत्रहोमे सति तत्रैव स्यात्तन्मा भूदिति । नवग्रहणमन्येषु मा भूदिति । नवेष्विति सिद्धे भोजनग्रहणं लौकिकेष्वपि प्राप्त्यर्थम् ॥

अथ व्रीहियवानां धाय्ये विराजौ ॥ १२ ॥

वैराज(१+तन्त्र)मिति वक्तव्ये धाय्ये विराजाविति कस्मादुच्यते। अत्रैके ब्रुवते। वैराजतन्त्रेत्युक्ते "इतिमात्रे विकारे वैराजतन्त्रेति प्रतीयात्" इति वचनाद् धाय्ये विराजौ[2] वार्त्रघ्नावाज्यभागावित्येतत्त्रयं पक्षेण[3] विहितं भवति। तथा सति। वार्त्रघ्नावाज्यभागौ प्राप्नुतः। तन्नेष्यते। इष्यते च वृधन्वन्तौ। तस्मान्न वैराजतन्त्रमित्युच्यत इति।

वयं तु ब्रूमः[4]। वार्त्रघ्नयोर्निवृत्त्यर्थमेव वैराजतन्त्रमिति नोच्यते। तत्तु कचिद्भवति, न सर्वत्र। यदामावास्याग्रयणयोरेकतन्त्रत्वं तदा वैराजतन्त्रमित्युच्यमाने वार्त्रघ्नावेव स्याताम्। कथम्। "दर्शपूर्णमासयोर्विकृतीनां समवाये दर्शपूर्णमासौ बलीयांसावन्यत्र प्रत्यक्षाम्नानात्" इति शास्त्रान्तरे वचनम्। तस्माद्वैराजतन्त्रमिति नोच्यते। आग्रयणे वार्त्रघ्नयोः प्रत्यक्षाम्नातत्वं। वैराजतन्त्रमित्युच्यमाने भवति हि[5]। आग्रयणे धाय्ये विराजावेव प्रत्यक्षाम्नाते, वार्त्रघ्नौ तु पूर्णमासातिदेशात्सामान्येनाग्रयणे प्राप्नुत इति। तस्माद[6]मावा-

(१) B² B³; इति सूत्रे B¹.

(२) च added in B³.

(३) पक्षेण B¹, विवक्षुणा B²; विवक्षुणा B³.

(४) ब्रूमः B³; मः B²; ब्रुवामः B¹.

(५) हि omitted in B².

(६)–मावास्याग्रयणयोर् (see line 2 of the same para.) to तस्माद्–omitted in B³.

स्याग्रयणयोरेकतन्त्रत्वे वृधन्वन्तौ भवतः । तस्मात्कदाचिदाग्रयणस्य वृधन्वन्तौ भवत इति ज्ञापनार्थं न वैराजतन्त्रमित्युच्यते । न[1] त्वेतावता केवलस्याग्रयणस्य वृधन्वत्प्रवृत्तिरिति दर्शपूर्णमासयोरप्याग्रयणेन समवाये धाय्ये विराजौ भवत एव । कुतः । तयोरेवाग्रयणे प्रत्यक्षाम्नातत्वात् ॥

[ अग्नीन्द्राविन्द्राग्नी वा विश्वे देवाः सोमो यदि तत्र श्यामाको द्यावापृथिवी ॥ १३ ॥ ]

[ आ घा ये अग्निमिन्धते सुकर्माणः सुरुचो देवयन्तो विश्वे देवास आगत ये के च ज्मा महिनो अहिमाया मही द्यौः पृथिवी च नः प्र पूर्वजे पितरा नव्यसीभिरिति ॥ १४ ॥ ]

इति द्वितीये नवमी कण्डिका



(१) न $B^2$ $B^3$; स $B^1$.

अथ द्वितीये दशमी कण्डिका

## अथ काम्याः ॥ १ ॥

अथशब्दोऽधिकारार्थः । इत उत्तरं या इष्टयो वक्ष्यन्ते ताः काम्या इति वेदितव्याः । तेन प्रागुक्तमाजस्रिकमिति सिद्धम् । काम्या इति वचनम् "आग्नेय्या उत्तरे" इत्येवमादीनामनुक्तकामानामपि काम्यत्वसंप्रत्ययार्थम् । इतरथा नित्यानि स्युस्तन्मा भूदिति ॥

## आयुष्कामेष्ट्याम् ॥ २ ॥

इत उत्तरं यद्वक्ष्यते आज्यभागादि संयाज्यान्तं तन्त्रं तत्सर्वम्, या या[1] आयुष्कामेष्टिः, तस्यां तस्यां तदेव तन्त्रं भवति । देवतास्त्वध्वर्युप्रत्ययत्वादन्या भवन्ति । इह अवान्तरेळायामाज्येन सह हिरण्मयान्कृष्णलानवद्यति । तत्राज्यस्यैव प्राशनं न कृष्णलानामिति । शास्त्रान्तरे वचनात्–नीळे[2] (?)व्रधयन्तो भक्षयन्तीति[3] ॥

[ जीवातुमन्तौ । आ नो अग्ने सुचेतुना

(१) या या B² B³; यथा B¹.

(२) नीळे (with a blank space indicative of a lacuna before it ) B¹; निति B² B³.

(३) भक्षयन्तीति B² B³; भवद्वयंतीति B¹.

त्वं सोम महे भगमिति ॥ ३ ॥]

[अग्निरायुष्मानिन्द्रस्त्राता । आयुष्टे विश्वतो दधदयमग्निर्वरेण्यः । पुनस्ते प्राण आयातु परा यक्ष्मं सुवामि ते ॥ आयुर्दा अग्ने हविषो जुषाणो घृतप्रतीको घृतयोनिरेधि । घृतं पीत्वा मधु चारु गव्यं पितेव पुत्रमभिरक्षतादिमम् ॥ त्रातारमिन्द्रमवितारमिन्द्रं मा ते अस्यां सहसावन् परिष्टौ ॥ ४ ॥]

[पाहि नो अग्ने पायुभिरजस्रैरग्ने त्वं पारया नव्यो अस्मानिति संयाज्ये ॥५॥]

स्वस्त्ययन्यां रक्षितवन्तौ । अग्ने रक्षा णो अंहसस्त्वं नः सोम विश्वत इति ॥ ६ ॥

अत्रे "त्वं नः सोम विश्वत" इति द्विगतेऽपि प्रतीके रक्षितवद्वचनलिङ्गाद् "रक्षा राजन्" ( ऋ० १।९१।८ ) इत्येषा गृह्यते, न

"गोपा अदाभ्यः" ( ऋ० १०।२५।७ ) इति ॥

[अग्निः स्वस्तिमान्। स्वस्ति नो दिवो अग्ने पृथिव्या आरे अस्मदमतिमारे अंह इति ॥ ७ ॥]

[ पूर्वयोक्ते संयाज्ये ॥ ८ ॥ ]

पुत्रकामेष्ट्याम् ॥ ९ ॥

केचिदिह पुत्रवन्तो (१=–वतो) वाज्यभागमिच्छन्ति । "अथ काम्याः" इत्यत्र काम्यग्रहणमेतदर्थम् । "यत्कामेष्टिस्तद्वन्ता-वाज्यभागौ" इति शास्त्रान्तरे वचनात् ॥

(अग्निः पुत्री। यस्मै त्वं सुकृते जातवेदो यस्त्वा हृदा कीरिणा मन्यमानः॥ १०॥)

[ अग्निस्तुविश्रवस्तममिति द्वे संयाज्ये ॥ ११ ॥]

---

(१) पुत्रवंतो B¹ B² B³.

[ आग्नेय्या उत्तरे ॥ १२ ॥ ]

नित्ये मूर्धन्वतः ॥ १३ ॥

निर्गुणस्योक्ते याज्यानुवाक्ये तस्यैव सगुणत्वे वचनादृते न प्राप्नुतः तस्माद्वचनमिति, तथा "एते एव भुवद्वद्भ्यो भुवनपतिभ्यो वा" इत्येतदपि ज्ञापकम् ॥

तुभ्यं ता आङ्गिरस्तमाश्याम तं काममग्ने तवोतीति कामाय ॥ १४ ॥

पूर्वं मूर्धन्वत इति षष्ठ्या निर्दिश्य पुनरिह चतुर्थ्या कामायेति ब्रुवन् ज्ञापयति अस्मिञ्छास्त्रे षष्ठी चतुर्थ्यर्थे भवतीति ॥

[ वैमृध्या उत्तरे ॥ १५ ॥]

[ वि न इन्द्र मृधो जहि मृगो न भीमः कुचरो गिरिष्ठाः । सद्युतिमिन्द्र सच्युतिं प्रच्युतिं जघनच्युतिम् । प्रनाकाफान आभर प्रयपस्यान्निव सक्थ्यौ वि न इन्द्र मृधो जहि । जनीखुदद्यथा-सफमाभि नः सुष्टुतिं नयेति ॥ १६ ॥ ]

[ इन्द्राय दात्रे पुनर्दात्रे वा ॥ १७ ॥]

[ यानि नो धनानि क्रुद्धो जिनासि मन्युना । इद्रानुविद्धि नस्तान्यनेन हविषा पुनः । पुनर्न इन्द्रो मघवा ददातु धनानि शक्रो धनीः सुराधाः । अस्मद्र्यक्कृणुतां याचितो मनः श्रुष्टी न इन्द्रो हविषा मृधातीति ॥ १८ ॥ ]

[ आशानामाशापालेभ्यो वा ॥ १९ ॥]

[ आशानामाशापालेभ्यश्चतुर्भ्यो अमृतेभ्यः । इदं भूतस्याध्यक्षेभ्यो विधेम हविषा वयम् । विश्वा आशा मधुना संसृजाम्यनमीवा आप ओषधयः सन्तु सर्वाः । अयं यजमानो मृधो व्यस्यत्वगृभीताः पशवः सन्तु सर्व इति ॥२०॥]

लोकेष्टिः ॥ २१ ॥

पृथिव्यन्तरिक्षं द्यौरिति देवताः ॥२२॥

पृथिवीं मातरं महीमन्तरिक्षमुपब्रुवे । बृहतीमूतये दिवम् ॥ विश्वं बिभर्त्ति पृथिव्यन्तरिक्षं विपप्रथे । दुहे द्यौर्बृहती पयः ॥ वर्म मे पृथिवी मह्यन्तरिक्षं स्वस्तये । द्यौर्मे शर्म महि श्रव इति तिस्रस्त्रयाणाम् ॥ २३ ॥

देवताग्रहणमाज्यभागनिवृत्त्यर्थम् । अथवा परस्परमपेक्ष्येत (?=-क्ष्यैताः) देवताः कथं स्युरित्येतदर्थम् । तेन किं सिद्धं भवति । पृथिव्यादीनां पृथक् क्रियायामेता याज्यानुवाक्या मा भूवन्निति सिद्धम् भवतीति[3] ।

तिस्रस्त्रयाणामित्यनुच्यमानेऽपि "प्रथमे प्रथमस्य" इत्येतदादिविधानादेव सिद्धेऽपि पुनरेतद्वचनं प्रदर्शनार्थम् । अन्यत्रापि पशुमत्सु चातुर्मास्येषु शुनासीरीयादिषु पशुषु तद्देवत्या[4]नामृचामल्प-

---

( १ ) अथवा परस्पर B² B³; अथवांतरस्वर- B¹.
( २ )-क्ष्येत B² B³;-क्ष्येरंवां ( sic ) B¹.
( ३ ) B¹; भवति B³, भवती B².
( ४ ) तद्देवत्या-B¹; तद्दैवत्या-B²; तद्दैवत्या-B³.

त्वेनोपायेन याज्यानुवाक्याः पूरयितव्या इत्येतदर्थम् ॥

## ( प्रथमे प्रथमस्योत्तमे मध्यमस्योत्तमा प्रथमा चोत्तमस्य ॥ २४ ॥ )

( इति द्वितीये दशमी कण्डिका )



( १ )-नोपायेन (-दा-corrected to-या-) B¹;-नोपधायेन B² B³.

॥ अथ द्वितीये एकादशी कण्डिका ॥

मित्रविन्दा महावैराजी ॥ १ ॥

मया मित्रं विन्दति सा मित्रविन्दा। ताश्च बह्वचः । तासु (१ महा+) वैराजी नामेष्टिर्विवक्ष्यते ॥

( अग्निः सोमो वरुणो मित्र इन्द्रो बृहस्पतिः सविता पूषा सरस्वती त्वष्टेत्येकप्रदानाः ॥ २ ॥ )

( अग्निः सोमो वरुणो मित्र इन्द्रो बृहस्पतिः सविता यः सहस्री । पूषा नो गोभिरवसा सरस्वती त्वष्टा रूपेण समनक्तु यज्ञम् ॥ ३ ॥

प्रतिलोममादिश्य यजेत् ॥ ४ ॥

प्रतिलोममादिश्येति सिद्धे यजेदिति वचनं याज्यायामेव प्रतिलोमत्वं न निगमेष्विति प्रदर्शनार्थम् ॥

ये३ यजामहे त्वष्टारं सरस्वतीं पूषणं सवितारं बृहस्पतिमिन्द्रं मित्रं वरुणं सोममग्निम् । त्वष्टा रूपाणि दधती

सरस्वती भगं पूषा सविता नो ददातु ।
बृहस्पतिर्ददिन्द्रः सहस्रं मित्रो दाता
वरुणः सोमो अग्निरिति ॥ ५ ॥

नियमार्थमेव पाठः क्रियते । अन्यतरेणैव सिद्धेऽप्युभय-वचनं विकल्पेनापि निगमेषु मा भूदिति । इतरथैन्द्रामारुत्यामिष्टि-भेदात् "इन्द्रं पूर्वं निगमेषु" इत्येवमाद्यास्तुल्यन्यायत्वादिहापि प्राप्नुयुस्तन्मा भूदित्युभयवचनम् ।

आगुरः पाठेऽक्रियमाणे त्वष्टारं सरस्वतीमित्येषोऽपि याज्याया एवादिभूतो मन्त्रावयवः स्यात् । तथा सति तदादावपि प्रति-लोमेन देवतादेशः[2] स्यात्तन्निवृत्त्यर्थम् ॥

( अष्टौ वैराजतन्त्राः ॥ ६ ॥ )

तासामाद्याः पळेकहविषः ॥ ७ ॥

"इन्द्राय दात्रे"[3], "आशानामाशापालेभ्यो वा" इत्यत्र वाशब्दः समुच्चयार्थोऽपि मा भूदिति वचनम् । अथवा नित्य-मेताः[4] इष्टय एकहविष एव कथं स्युरित्येतदर्थम् ।

---

( १ ) इष्ट-B¹ B², दष्ट-B³.
( २ ) देवतादेशा B² B³; देवतातिदेशः B¹.
( ३ ) दात्रेण B¹.
( ४ ) नित्य एता B¹.

इतरथा एतासामन्यतरस्यापपीष्टौ प्रारब्धायां भीद् निर्वापाद्य[2] (१+थ) श्रुपातो वा ब्रतातिपत्तिर्वा स्यात्तत्र नैमित्तिकया समानतन्त्रत्वं[3] स्यात्तन्मा भूदिति वचनम्। अथवाध्वर्युप्रत्ययत्वादेतासामनेकहविष्ट्वं यदि स्यात्तथा सत्यवैरानि(१=-ज)तन्त्रा भवन्तीत्येतदर्थम् ॥

[स्नुषा श्वशुरीयया भिचरन्यजेत ॥८॥]

[इन्द्रः सूरो अतरद्रजांसि स्नुषा सपत्ना श्वशुरोऽहमस्मि। अहं शत्रूञ्जयामि जर्हृषाणोऽहं वाजं जयामि वाजसातौ॥ इन्द्रः सूरः प्रथमो विश्वकर्मा मरुत्वाँ अस्तु गणवान्सजातैः। मम स्नुषा श्वशुरस्य प्रशिष्टौ सपत्ना वाचं मनसा उपासताम् ॥ ९ ॥]

[जुष्टो दमूना अग्ने शर्द्ध महते सौभगायेति संयाज्ये ॥ १० ॥]

---

(१) तासा–B[1].

(२) निर्वापाद्य–B[3]; निर्वापाद्य–B[1]; lacuna in B[2].

(३) B[3]; तन्त्रं B[2]; मन्त्रत्वं B[1].

[ विमतानां सम्मत्यर्थे संज्ञानी ॥११॥ ]

[ अग्निर्वसुमान् सोमो रुद्रवानिन्द्रो मरुत्वान् वरुण आदित्यवानित्येकप्रदानाः ॥ १२ ॥ ]

[ अग्निः प्रथमो वसुभिर्नो अव्यात् सोमो रुद्रैरभिरक्षतु त्मना । इन्द्रो मरुद्भिर्ऋतुथा कृणोत्वादित्यैर्नो वरुणः शर्म यंसत् ॥ समग्निर्वसुभिर्नो अव्यात् सं सोमो रुद्रियाभिस्तनूभिः । समिन्द्रो रातहव्यो मरुद्भिः समादित्यैर्वरुणो विश्ववेदा इति ॥ १३ ॥ ]

ऐन्द्रामारुतीं भेदकामाः ॥ १४ ॥

अत्र भेद[1]कामा इति बहुवचनं समेत्य बहवः कुर्युरिति । कथममुष्य[2] बलवतो राज्ञः स्वैर्जनपदैर्भेदः स्यात्, कथं वा[3]स्मानभि

(१) केद-corrected to भेद-in B[1].
(२) कथममुष्य B[1], कथमम् B[2], कथममु B[3].
(३) कथं अ-B[2] B[3].

गच्छेदिति परराष्ट्रवासिनः कुर्युरिति ॥

[ मरुतो यस्य हि क्षये प्र शर्धाय मारुताय स्वभानव इति ॥ १५ ॥ ]

ऐन्द्रीमनूच्य मारुत्या यजेन्मारुतीमनूच्यैन्द्र्या यजेदिन्द्रं पूर्वं निगमेषु मरुतो वा ॥ १६ ॥

अत्र मारुत्य( १= त्यां ) याज्यायां[1] म[2]रुतादेशः कर्तव्यः ॥

[ इन्द्रं वाप्रदानादूर्ध्वं मरुतः ॥१७॥ ]

प्रकृत्या सम्पत्तिकामाः संज्ञानीं च ॥१८॥

कथमस्माकं राज्ञः स्वैर्जनपदैर्भेदो मा भूदिति स्वराष्ट्रवासिनः कुर्युरिति ॥

ऐन्द्राबार्हस्पत्यां प्रधृष्यमाणाः ॥ १९ ॥

प्रधृष्यमाणा इति बलात्कारेणाभिभूता इति ॥

---

( १ )-याज्यायां B² B³; याज्याया B¹.

( २ ) मा-B².

आ न इन्द्राबृहस्पती अस्मे इन्द्राबृह-
स्पती इति यद्यपीन्द्राय चोदयेयुः ॥२०॥

अस्मिन्निमित्ते यदा केवलेन्द्राय चोदयेयुस्तदाप्येते इन्द्राबृहस्पति देवत्ये एव याज्यानुवाक्ये कर्त्तव्ये इति ॥

( इति द्वितीय एकादशी कण्डिका )

---

( १ ) -पती B¹.

अथ द्वितीये द्वादशी कण्डिका ।

वर्षकामेष्टिः कारीरी ॥ १ ॥

यइयो वर्षकामेष्टयस्तासु कारीरीति नाम[1](१—पि-)का[2] वक्ष्ये ॥

तस्यां प्रति त्वं चारुमध्वरमीळे अग्निं स्ववसं नमोभिरिति धाय्ये ॥ २ ॥

तस्यामित्यनुच्यमाने, "या काश्च वर्षकामेष्टय" इत्येतदन्तं वा सूत्रं क्रियते, तथा सत्येते धाय्ये सर्वासु वर्षकामेष्टिषु स्याताम् । अनिष्टं चैतत् । तस्मात्तस्यामिति वचनम् । तस्यां कारीर्यामेवैते धाय्ये[3] भवतो न सर्वास्विति ॥

याः काश्च वर्षकामेष्टयोऽप्सुमन्तौ ॥ ३ ॥

अप्स्वग्ने सधिष्टवाप्सु मे सोमो अब्रवीदिति ॥ ४ ॥

अप्सु मे सोमो अब्रवीदिति द्विर्गतेऽपि प्रतीके अवभृथेष्ट्याम् "अप्सुमन्तौ गायत्रौ" इति दर्शनादिहापि गायत्र्यैव ( १—ऽयेव )

---

( १ ) B¹, कारीरी B² B³

( २ )-नामका B¹, नाम B² B³

( ३ ) धाय्ये B¹ अवभृतेष्ट्या धाय्ये B², अवभृथ्या धाय्ये B³

गृह्येते[1] ( १=–ह्यते ) । कथमप्सुमन्तौ "पयस्वानग्ने"[2] (ऋ० १०।६।६) इति लिङ्गात्[3] । यथा "प्राजापत्ये तु जामदग्न्यः सर्वेषाम्" इत्यत्र जामदग्न्य ( १+इति ) ग्रहणात् "समिद्धो अद्येति सर्वेषाम्" इत्यत्र जामदग्न्य एव गृह्यन्ते, न "समिद्धो अद्य राजसि"(ऋ० १।१८८।८) इति गृह्यते, तद्वदिहापीति ॥

अग्निर्धामच्छन्मरुतः सूर्यः ॥ ५ ॥

तिस्रश्च पिण्डय उत्तराः ॥ ६ ॥

हिरण्यकेशो रजसो विसार इति द्वे त्वन्त्या चिदच्युता धामन्ते विश्वं भुवनमधिश्रितमिति वावाश्रेव विद्युन्मिमाति पर्वताश्चिन्महि वृद्धो बिभाय सृजन्ति रश्मिमोजसा बहिष्ठेभिर्विहरन्यासि तन्तुमुदीरयथा मरुतः समुद्रतः प्र वो मरुतस्तविषा उदन्यव आयन्नरः

---

( १ ) गायत्र्यैव गृह्येते B[1]; गायत्रैव प्रगृह्येते B[2]; गायत्र्यव प्रगृह्यते B[3].

( २ )-स्यानग्न B[3]; -स्वान् प्र B[2].

( ३ ) कथम्-to लिङ्गात् is given with marks of dele tion in B[1].

सुदानवो ददाशुषे विद्युन्महसो नरो अश्मदिद्यवः कृष्णं नियानं हरयः सुपर्णा नियुत्वन्तो ग्रामजितो यथा नरः ॥ ७ ॥

याज्यानुवाक्यासु लिङ्गात्पिपठीना मरुतो देवतेत्यत्र गम्यते। एताः स्वाहाकारप्रदाना[1] भवन्ति । तस्माद्देवतानिर्देशो न क्रियते ।

उत्तरा इति वचनमेता एव नित्यमुत्तराः स्युः, नाग्निर्धामच्छदुत्तर इति । तेन मरुतः सूर्य इत्येतयोरनित्यत्वं दर्शयति ।

तिस्र इति वचनं यद्यपि समाना देवतास्तथापि त्रिर्निगमनं कर्तव्यमिति । "समानां[2] देवतां समानार्थाम्" इति । याज्यानुवाक्याभेदाच्च[3] पृथगुपलक्षणं सिद्धम् ।

हिरण्यकेशो रजसो विसार इत्येते निर्गुणास्याग्नेर्भवतः । निर्गुणामपि केचिच्चोदयन्ति । उत्तरे एव धामच्छदः । एवमिह व्यवस्थितविभाषा कल्पयितव्या ॥

---

(१) -प्रदाना B¹,-प्रदर्शना B² B³

(२) समाना B¹, समान- B² B³

(३) -भेदाच्च B² B³,-भेदाश्च B¹.

[ अग्ने बाधस्व वि मृधो वि दुर्गहा
यं त्वा देवापिः शुशुचानो अग्न इति-
संयाज्ये ॥ ८ ॥ ]

ऋचोऽनूच्य यजुर्भिरेके यजन्ति ॥ ९ ॥

पिण्डि( १ =तादी- )नामेतद्विधानम् । तान्यपि यजूंष्यध्वर्युभ्य आगमयितव्यानि । येषा मध्वर्यूणां यजूंष्याम्नातानि तैरेव सह प्रयोगे कर्त्तव्यानीत्येतदर्थमिह यजुषां पाठो न क्रियते ।

ऋचोऽनूच्येत्यनुक्त्वा यजुर्भिर्यजन्तीत्येतावतैवोच्यमाने अनुवाक्या अपि यजूंष्येव स्युः । तस्माद्यजतिचोदनायामुभयोर्याज्यानुवाक्ययोर्ग्रहणं भवति हि । यथा "एतस्मिन्नेवासने वैश्वानरीयस्य यजति" इत्यत्र न केवला याज्यैव गृह्यते । तद्वादिहापि स्यात् । तन्मा भूदित्यृचोऽनूच्येत्युच्यते ॥

संस्थितायां सर्वा दिश उपतिष्ठेताच्छा वद
तवसं गीर्भिराभिरिति चतसृभिः ॥ १० ॥

( १ ) पिण्डिना-$B^1$, पिण्डिताना-$B^2$ $B^3$
( २ ) ये एषा-corrected to येषा in $B^1$; एव-$B^2$ $B^3$
( ३ ) भवति हि $B^2$ $B^3$; भवती $B^1$
( ४ ) -वासने $B^2$ $B^3$, वाग्रसाने B

प्रावर्ग्यस्याजपादुपस्थानं कर्तव्यम् । कस्मात् "संस्थाजपेनोपस्थाय वीर्थेन निष्क्रम्यानियम." इति संस्थाजपोपस्थानादूर्ध्वमनियमत्वविधानात् । चतसृभिरिति मन्त्रचतुष्ट्वाद्दिशोऽपि चतस्र एव कर्तव्याः । एवं सति सर्वा इति परिभाषार्थः । "सर्वा दिशो ध्यायेच्छंसिष्यन्" इत्यत्रापि चतस्र एव कथं गृह्येरन्निति चतस्र इति ग्रहणात् । केचित्त्ववान्तरदिशामपि ग्रहणार्थं सर्वग्रहणं कृतमिति मन्यन्ते ॥

## प्रत्यृचं सूक्तेन सूक्तेन वा ॥ ११ ॥

वीप्साकरणं प्रतिदिशं सूक्तस्यावृत्त्यर्थम् । प्रत्यृचग्रहणं प्रत्यृचमुपस्थानार्थम् । तस्मादेकैकस्या दिशो दशकृत्व[2] उपस्थानं कर्तव्यम् । इतरथा सर्वस्य सूक्तस्यान्ते सकृदेवोपस्थानं स्यात् । तस्मा भूदिति प्रत्यृचग्रहणम् ।

"आग्नेय्या उचो" इत्येवमादीनामिष्टीनां कामो न चोद्यते । तस्मिन्प्रयोजनं यस्मिन्कस्मिन्नपि कामे[3] यद्येता इष्टयः प्रयुज्यन्ते तत्र तत्रापि कथं वैराजतन्त्रमेव स्यादिति । यदा संस्थिते

---

( १ ) चत्वार corrected to चतस्र in B[1], चत्वार B[2] B[3]

( २ ) दशकृत्व B[1], सकृत्पर ( sic ) B[2] B[3].

( ३ ) कामे B[2] B[3]; कामे न B[1].

पौर्णमासे इन्द्राय वैमृधायेष्टिः क्रियते तदा तत्र वैराजतन्त्रं[1] भवति। कुतः। प्रकरणान्तरत्वात्। काम्यप्रकरणे यदुक्तं तदाजस्रके[2] न भवति हि। "असमाम्नातास्त्वर्थाच्चन्त्रविकारा" इत्यत्रामावास्यमेव तन्त्रं भवति। कौषीतकिनामपि वचनम् "संस्थितायां पौर्णमास्यामिन्द्रायेष्टिर्विमृधेऽमावास्याविकारः" इति ॥

( इति द्वितीये द्वादशी कण्डिका )

---

(१) तंत्रत्वं B¹.
(२) B² B³; तद्याचके B¹.

अथ द्वितीये त्रयोदशी कण्डिका।

अत ऊर्ध्वमिष्टययनानि ॥१॥

अत ऊर्ध्वमिति दर्शपूर्णमासाभ्यामूर्ध्वं यां कां चनेष्टिमकृत्वेष्टययनानि नारब्धव्यानी[1]त्येतदर्थम्। काम्याधिकारनिवृत्त्यर्थमित्येके॥

[ सांवत्सरिकाणि ॥ २ ॥ ]

[ तेषां फाल्गुन्यां पौर्णमास्यां चैत्र्यां वा प्रयोगः ॥ ३ ॥ ]

[ तुरायणम् ॥ ४ ॥ ]

अग्निरिन्द्रो विश्वे देवा इति पृथगिष्टयोऽनुसवनमहरहः ॥ ५ ॥

पृथग्ग्रहणम् "एका वा" इति विधानार्थम्[2]। अथवैताः समानतन्त्रा मा भूवन्निति केचित्। कार्यवशेन पौर्वाह्णिकीमकृत्वा

(१) नारब्धानि-B[1].
(२) विधानार्थं B[2] B[3], विचित्यार्थं B[1].

[ द्यावापृथिव्योरयनम् ॥ १५ ॥ ]

[ पौर्णमासेनामावास्यादामावास्येना पौर्णमासात् ॥ १६ ॥ ]

## असमाम्नातास्वर्थात्तन्त्रविकारः ॥१७॥

अस्मिन् शास्त्रेऽसमाम्नाता इष्टयस्तास्वर्थात्सामान्यात् तन्त्र[1]-विकारः। तन्त्र[2]विशेष इत्यर्थः। देवतासामान्यं हविःसामान्यमन्त्रसामान्यमिति त्रिविधं सामान्यमिति। तत्राग्नेरेकत्वात्[3] सर्वा एक[4]देवताः सूर्यमित्रादयो निर्विकाराः। अन्यत्र सोमादिन्द्राच्च। "अग्नीषोमौ" इत्यत्र पौर्णमास्यां सोमस्य दृष्टत्वात्, "इन्द्राग्नी अमावास्यायाम्" इत्यत्रेन्द्रस्य दृष्टत्वाच्च सोमश्चेन्द्रश्च स्वयं मत्यक्तदेवते। तस्माच्चौ नाग्नेयविकाराविति। अग्नेर्दर्शपूर्णमासयोरुभयोर्दृष्टत्वादाग्नेयविकाराणाम( ? = मा- )मावास्यं पौर्णमासं[6] वा तन्त्रं

---

(१) सामान्यात् तन्त्र-B³; सामान्या तंत्र-B²; सामान्यतंत्र-B¹.

(२) तत्र-B¹.

(३) एकत्वात् B² B³; एकत्वात् corrected to एयत्यात् (?) or एकवत्वात् in B¹.

(४) एक-B² B³; एक-corrected to एय in B¹.

(५)-ग्नीम-B¹.

(६) अमावास्यं पौर्णमासं B¹; अमावास्यं पौर्णमासा B², अमावास्यां पौर्णमास B³.

भवति। सौम्यस्य(१) तु पौर्णमासमेव। इन्द्रस्य तु द(? = दा)र्शमिति।

अथ द्विदेवतबहुदेवतेषु—

याश्चतुरक्षरप्रभृतयोऽन्यादिसहिता यथा(२) अग्नीषोमौ मित्रावरुणौ अग्नाविष्णू विश्वे देवाः सगुणाश्च मरुतः सान्तपना इति, द्व्यक्षरत्र्यक्षरेष्वपि याः सोमसहिताः सोमाग्नी इत्येवमादीनां पौर्णमासतन्त्रं भवति।

याः पुनः द्व्यक्षरत्र्यक्षरा द्विदेवतबहुदेवता असोमसहिता यथेन्द्राग्नी अश्विनौ मरुत इत्येवमादयः, चतुरक्षरप्रभृतिष्वपि याश्चेन्द्रसहिता यथेन्द्राग्नी (?)विष्णू इन्द्रावरुणावित्यादयः, एतासां दार्श(३)तन्त्रं भवति।

यत्र तु सोमेन्द्रौ तत्र हि सोमस्य मुख्यत्वात्पौर्णमासतन्त्रं भवति। तयोस्त्र्य(४)क्षरत्वात् तावि(५)न्द्रविकारौ। कुतः। इन्द्राग्न्योरपि त्र्यक्षरत्वात्। तयोस्त्र्यक्षरत्वादामावास्यं तन्त्रं भवतीत्येके।

(१) सौम्यस्य B[2] B[3], सोमस्य B[1].
(२) यथा B[2] B[3], या B[1].
(३) दार्श B[2] B[3], दर्श-B[1].
(४) तयोस्त्र्य-B[2] B[3], योस्त्र्य-B[1].
(५) त्वात्तावि-B[3], -त्वातावि-B[2], -त्वावि-B[1].

## अध्वर्युर्वा यथा स्मरेत् ॥ १८ ॥

सामिधेन्याज्यभागसंयाज्यादिषु यथाध्वर्यूणां तथा कर्त्तव्यमिति ॥

## [ वैराजं त्वग्निमन्थने ॥ १९ ॥ ]

## धाय्ये त्वेवैके ॥ २० ॥

अस्मिन्पक्षे आज्यभागावर्वाद् ग्राह्यौ ॥

## देवतलक्षणा याज्यानुवाक्याः ॥ २१ ॥

उत्तरसूत्रयोरेव[1]—पुरस्ताद्देवतालक्षणानुवाक्या, उपरिष्टाद्देवतालक्षणा याज्या—इत्येवं लघुनोच्यमानेऽपि सिद्धस्य पृथगारम्भः समाम्नातार्थमपि क्रियते। तेन किं सिद्धं भवति? याज्यानुवाक्ययोर्लिङ्गाद्देवतानिर्णयः प्रत्येतव्य इति। "वैमृध्या उत्तरे" इत्यत्र याज्यानुवाक्ययोरिन्द्रदर्शनादिन्द्रो वैमृध इति। तथा स्नुषाश्वशुरीयायामपि याज्यानुवाक्ययोरिन्द्रस्य सूर्यस्य[2] दर्शनादिन्द्रः सूरो[3] देवतेति ॥

---

(१) -रेव omitted in B[1].
(२) सूर्यस्य B[1], सूर्य- B[2] B[3]
(३) सूरो B[1], साधो B[2] B[3].

## गायत्र्यावती हूतवत्युपोत्तवती पुरस्ताल्लक्षणानुवाक्या ॥ २२ ॥

उपोक्तवतीति पाठः कर्त्तव्यः । उपशब्दसहितस्य ब्रवीते रूपमुपोक्तशब्देन गृह्यते यथोपब्रुवत[1] इति । अथवोपशब्देन सहोक्तं यस्य कस्यचिद्धातो रूपमुपोक्तमिहोच्यते । यथा संह्वयत[2] (?) इति । पूर्वार्धे देवता शब्दो यस्याः सा पुरस्ताल्लक्षणेत्युच्यते ॥

## [ त्रिष्टुब्वती वीतवती जुष्टवत्युपरिष्टालक्षणा याज्या ॥ २३ ॥ ]

## अपि वान्यस्य च्छन्दसः ॥ २४ ॥

सं(?)याज्यानुवाक्ययोरुभयोरप्ययं विधिर्भवति । कुतः । उत्तरत्र "न तु याज्या ह्रसीयसी" इति याज्याग्रहणात्[3] । यदि याज्याया एवायं विधिः स्यात् "न तु याज्या ह्रसीयसी" इत्यस्य सूत्रस्यारम्भोऽपार्थकः[4] स्यात् । कथम्[5] । यदि नित्यमनुवा-

---

( १ ) यथोपब्रुवते B², यथोपब्रुवत B³; यथोपब्रुत B¹.
( २ ) सह्वयत B¹; संह्वयत B² B³.
( ३ )-ग्रहणात् B² B³;-ग्रहणम् B¹.
( ४ )-रम्भोपार्थक B² B³,-रम्भो सार्थका B¹.
( ५ ) कथम् B¹; omitted in B² B³.

यथा गायत्र्येव स्यात्तदा याज्याया ह्रसीयस्त्वं न सम्भवतीति। तस्मादारम्भणम्। आरभ्यते च "न तु याज्या ह्रसीयसी" इति। तस्मात् "अपि वाक्य( ? = ग )र्थे च्छन्दसः" इत्ययं विकल्पोऽनुवाक्यायामपि भवतीति सिद्धम्॥

## [ न तु याज्या ह्रसीयसी ॥ २५ ॥ ]

## [ नोष्णिङ् न बृहती ॥ २६ ॥ ]

## क्षामनष्टहतदग्धवतीस्तु वर्जयेत् ॥२७॥

एकवचनाधिकारे पुनर्वचननिर्देशात् प्रथमाधिकारे द्वितीयानिर्देशाच्च याज्यानुवाक्ययानामुभया[1]सामेतद्विधानं भवति। इतरथा याज्याधिकाराद्याज्याया एव स्यात्॥

## व्यक्ते तु दे( ? दै )वते[3] तथैव ॥ २८ ॥

"तु( ? = स्तु )तिर्नाम्नां[4] बान्धवकर्मरूपैः" इति नामादिभिर्देवताः स्तूयन्ते। [5]यस्यामृचि देवतानामशब्दो न वि-

(१) वाक्यस्य ( क्य with a mark of doubt in B[1] ) B[1] B[3]; काक्यस्य B[2].

(२) उभया-B[1];-उभय-B[2] B[3].

(३) देवते B[1] B[2] B[3].

(४) स्तुतिर्नाम्ना B[1]; स्तुतीर्नाम्ना B[2]; स्तुतीर्नाम्ना B[3].

(५) यत्र added in B[1].

यते, बान्धवकर्मरूपैः स्तवनं विद्यते, यस्यां तु[1] निपातभाजो देवताया नाममात्रमेव विद्यते, न बान्धवादिभिः स्तवनम्, तत्रोभयोर्देवताशब्दमात्रमनादृत्य बान्धवादिभिर्यस्यां स्तुतिः श्रूयते तामेव गृह्णीयादित्यस्य वाक्यस्यार्थः ॥

## लक्षणमपि वाव्यक्ते ॥ २९ ॥

बान्धवादिभिः[2] स्तुत्या( १ = त्य )लाभे निपातभाजनमपि देवताशब्दमात्रमेव गृह्णीयादिति ॥

## अनधिगच्छन्सर्वशः ॥ ३० ॥

अस्मिन्नृग्वेदे निपातभाजनमप्यनधिगच्छन्सर्वेभ्यो वेदेभ्यो[4] मृगयेत् ॥

## [ अनधिगम आग्नेयीभ्याम् ॥ ३१ ॥]

## [ व्याहृतिभिर्वा ॥ ३२ ॥ ]

## देवतामादिश्य प्रणुयाद्यजेच्च ॥३३॥

यदा व्याहृतिभिर्यागस्तदा प्रथमया विभक्त्या देवतामादि-

---

( १ ) यस्यांतो B[1].
( २ )-दिभि B[2] B[3],-दि B[1].
( ३ ) स्तुत्यालाभे B[1], स्तुत्यश्चलाभे B[2] B[3].
( ४ ) वेदेभ्यो B[1]; देवेभ्यो B[2] B[3].

श्य प्रमुपाघजेच । अनुवाक्यायाः[1] पूर्वमेव देवतादेशः कर्त्तव्यः, पश्चाद्व्याहृतयः। यथा-निः ( १ = अग्निः )[2] सङ्कुसुको भूर्भुवः स्वरो-३म्, ये ( +३ ) यजामहेऽग्निं सङ्कुसुकं भूर्भुवः स्वरग्निः[3] सङ्कुसु-का ३ वौ३षळिति ।

चितो[4]वागूर्यादेशं यजतीति याज्याया। पूर्वं प्रसिद्धस्यैवादेशस्य परिसंख्यानभयात्पुनरिह विधानं मन्यन्ते । इतरथानुवाक्यायां विहितत्वाद्याज्यायां निवृत्तिः स्यात्तन्मा भूदिति ।

यजेचेति वचनं द्विदेवतबहुदेवतानां व्याहृतिभिर्यागः कर्त्तव्य इति ॥

नम्राभ्यां वा ॥ ३४ ॥
इममाशृणुधी हवं यं त्वा गीर्भिर्हवामहे ।
एदं बर्हिर्निषीद नः ॥
स्तीर्णं बर्हिरानुषगासदेत-
दुपेळाना इह नो अद्य गच्छ ।

---

( १ ) अनुवाक्याया B¹; अनुवाक्यया B² B³.
( २ ) यथा निः B¹ B² B³.
( ३ ) अग्निः B² B³, अग्निं B¹.
( ४ ) चिता B¹, चित्ता B² B³.

अहेळता मनसेदं जुपस्व
वीहि हव्यं प्रयतमाहुतं म
इति नम्रे ॥ ३५ ॥
आग्नेय्यावनिरुक्ते ॥ ३६ ॥

इहासदेतदि[1]त्यत्रासदे त इति वा पाठः[2] । उपा ाना[3] इत्यत्र उपेळाना[4] इति वोवे ( ? = पे ) ळान इति[5] वा पाठः । तत्रो-ह्यानि पदानि व[6]क्ष्यमाणानि । शृणुधि, निषंधे(? = त्वा निषीदे) त्येवान्य(?)नुवाक्यायाम् । अथ याज्यायां भवति ( ?+आसदे त इति ) पाठे त[7] इत्येतत्पदम्, उपेधाना(?)[8] इति पाठे एतच्च[9], गच्छ जुपस्व वीहि इत्येतानि च । शृणुतम्, शृणुत । निषीदतम्, निषीदत[10] । त्वा, वाम्, वः । ते, वाम्, वः । उपेळान उपे-

---

( १ ) दि-B[1]; -दी-B[2] B[3].
( २ ) कर्तव्यः added in B[2] B[3].
( ३ ) उपालाना B[2]; उणालाना B[3]; कुणशाना B[1].
( ४ ) उपेलाना B[2] B[3]; उपेलान B[1].
( ५ ) घोवेलानानिति B[2] B[3], वोवेलान इति B[1].
( ६ ) व-B[2] B[3]; य-B[1].
( ७ ) भवति पाठे त B[2]; भवंति पाठे त B[3]; भवंति पाठेन B[1].
( ८ ) उपेधाना B[1]; उपधाना B[2] B[3].
( ९ ) एतच्च B[2] B[3]; एतच्च B[1].
( १० ) B[1]; निषेदतं निषेदत B[2] B[3].

लाना:[1] । गच्छतम्, गच्छत । जुषेथाम्, जुषध्वम् । पीतम्, पीत ( १ = पीतम्, वीत )।

अनयोर्देवताशब्दा[2]भावा ( १ द ) नि[3]रुक्तत्वे सिद्धे पुनरनिरुक्त इति वचनम् "आग्नेयीभ्याम्" ( २।१३।३१ ) इत्यत्र निरुक्तयोरेव ग्रहणार्थम् ।

नम्राधिकारे पुनरिह नम्रे इति वचनमेतयोर्गुणविधानार्थम् । नम्रे[4] नमनशीले( १ इ+ )त्यर्थः[5]। किमुक्तं भवति । द्विदेवतबहुदेवतेषु ऊहेदित्युक्तं भवति। कौषीतकि[6] नामपि वचनम् "ऊहेद्द्विदेवतबहुदेवतेषु" (शां० श्रौ० सू० १।१७।१६)इति। अथवा नमन[7]शीले इति ऊहापि द्विदेवतबहुदेवतेष्वपि सामर्थ्यात् । द्विदेवते द्विवद्भवतो[8] ( १= ति ), ( १+बहुदेवते ) बहुवदिति. अनयोः सामर्थ्यादिति ॥

( इति द्वितीये त्रयोदशी कण्डिका )

---

( १ ) उपेलान उपेलाना B²; उपेलानः। उपेलानाः B³, उपेलानौ। उपलानाधिः B¹.

( २ )-शब्द-B¹.

( ३ )-भावानि-B² B³,-भावाज्ञि-B¹.

( ४ ) नम्रे B² B³; नम्रेर् B¹.

( ५ )-शीलेत्यर्थः B¹;-शीतेत्यर्थः B² B³.

( ६ )-कि-B³;-की-B¹ B².

( ७ ) अथवा नमन-B¹; अनमन-B² B³.

( ८ ) भवती B³; भवतो B¹ B².

अथ द्वितीये चतुर्दशी कण्डिका

## चातुर्मास्यानि प्रयोक्ष्यमाणः पूर्वेद्युर्वैश्वानरपार्जन्याम् ॥ १ ॥

इह याज्यानुवाक्ययोरग्निशब्ददर्शनादग्निर्वैश्वानर इत्यवगम्यते। ज्ञापकत्वाच्च। कथम्। "वैश्वानराय विमतानामन्नभोजने[2]" (३।१३) इत्यत्रावश्यमग्निना वैश्वानरेण भवितव्यम्। कुतः। "अथाग्नेय्य इष्टयः" (३।१३) इत्यत्राग्न्यविकारात्। न च तत्राग्नेर्वैश्वानरस्य याज्यानुवाक्ये विधीयेते[3], "अदृष्टादेशे नित्ये" (२।१) इति होक्तयोः सिद्धत्वात्। यदिह केवलो वैश्वानरः स्यात्तत्र[4] याज्यानुवाक्ये वचनादृते सगुणस्य नैव प्राप्नुयुः[5](?)। यथा "नित्ये मूर्धन्वतः" (२।१०) इति। तस्मादिहाग्निर्वैश्वानर इति सिद्धम्।

यद्यध्वर्यवो निर्गुणं चोदयेयुः, "ऋतावानं वैश्वानरम्" (८।१०), "नाभिं यज्ञानाम्" (ऋ० ६।७।२) इत्येते याज्यानुवाक्ये भवतः। कौषीतकि[6]नामेते एव निर्दिष्टे।

---

(१) विमता-B[1] ( धीह-for विम-on the margin ); विहता B[2] B[3].

(२)-भोजन B[1];-भोजनम् B[2] B[3].

(३)-यंते B[1];. येति य B[2] B[3].

(४) B[1]; केवलो वैश्वानरस्य तत्र B[2]; केवलौ वैश्वानरस्य तत्र B[3].

(५) नैव प्राप्नुयुः B[1]; प्राप्नुयुः B[2] B[3].

(६)-कि-B[1];-की B[2] B[3].

केचित्तु "वैश्वानरो अङ्गिरोभ्यः" ( ८।११ ) इत्यनुवाक्यां कुर्वन्ति । तन्न सुष्ठु भवति । होत्र (? हौत्र-) सम्बन्धित्वादन्येभ्यो गोत्रेभ्यो न[1] प्राप्नोति । तथा "सोम (?स्तोम-) उक्थं च चाकनत्" (८।११) इति सो (? स्तो-) मोक्थसम्बन्धादन्यत्र न प्रयुज्यते ।

एवं गोत्रकालद्रव्यप्र[2]करणादिभिर्विशेषैरसम्बन्ध[3] ऋचः परीक्ष्य[4] याज्यानुवाक्याः कर्त्तव्याः । यथा "शर्यणावति सोमम्" ( ऋ० ६।११३।१ ) इत्येषा शर्यणावत्येव सोमे स्तूयमाने प्रयोक्तव्या, नान्यत्र । इत्येवमन्यत्रापि हि[5]।

वैश्वानरपार्जन्यामिति स्त्रीलिङ्गनिर्देशाद्याज्यानुवाक्याविधानाच्च इष्टिरित्यवगम्यते । तथान्वारम्भणीयादिष्वपि ॥

[वैश्वानरो अजीजनदग्निर्नो नव्यसीं मतिम् । क्षमया वृधान ओजसा ॥ पृष्टो दिवि पृष्टो अग्निः पृथिव्याम् । पर्जन्याय प्रगायत । प्रवाता वान्ति पतयन्ति विद्युत इति ॥ २ ॥ ]

---

( १ ) न $B^2$ $B^3$, omitted in $B^1$.
( २ )-कालद्रव्यप्र-$B^1$;-कालाप्रत्य-$B^2$ $B^3$.
( ३ ) असंबन्ध $B^2$ $B^3$, असबंधा $B^1$.
( ४ ) परीक्ष्य $B^1$; परिवद्य $B^2$ $B^3$.
( ५ ) हि $B^2$ $B^3$, ह $B^1$.

## अग्न्याधेयप्रभृत्या ता उपांशुहविषः ॥ ३ ॥

असमाम्नातैः सहोपांशुहविषो भवन्ति । दाक्षायणयज्ञे द्यावापृथिव्योरयने च प्रसिद्धयोर्ग्रहणात्तेषां दर्शपूर्णमासवदुच्चैष्ट्वमेव । वाजिनस्याप्यङ्गहविष्ट्वादुच्चैःस्वर(१+त्व)मेव भवति ॥

## सौमिक्यः ॥ ४ ॥

सोमोत्पन्ना या इष्टय उखासम्भरणीयादयः ताश्चोपांशुहविषो भवन्ति ॥

## प्रायश्चित्तिक्यः ॥ ५ ॥

प्रायश्चित्तनिमित्ताश्चेष्टय उपांशुहविषो भवन्ति ।

इह केचित्प्रायश्चित्तनिमित्तानां[1] पशूनां वाप्युपांशुत्वं कुर्वन्ति । आश्विनैन्द्राग्नादीनां कथं प्रायश्चित्तिक्यो देवता इति वर्णयन्ति । तन्नोपपद्यते । तथा सति "सौमिक्यः" (२।१४) इत्यत्रापि सौमिक्यो देवता इति स्यात् । एवमग्नीषोमीयसवनीयानुबन्ध्या(-नाम[2])प्युपांशुत्वं स्यात् । न तथा[3] कैश्चिद[4]प्यङ्गीक्रियते ।

(१) प्रायश्चित्तनिमित्तानां B¹ B²; प्रायश्चित्तिक्यो देवता इ निमित्तानां (sic) B³.

(२) -नुवाक्यानाम् (for-नुबन्ध्यानाम्) B².

(३) स्यान्न तथा B¹; तथा B², स्यात्तथा B³.

(४) कैश्चिद् B² B³; केचिद् B¹.

तेनेष्टय[1]धिकाराच्च प्रायश्चित्तिक्य इष्टय इति सिद्धम् ॥

## अन्वायात्यैककपालाः ॥ ६ ॥

चातुर्मास्यपर्वसु द्यावापृथिव्यादय एककपालाः । असमा-सा[2]धिकारे समासकरणं पूर्वा[3] इष्टय एता देवता इति ज्ञापनार्थम्॥

## सर्वत्र वारुणवर्जम् ॥ ७ ॥

अवभृथेष्टयां वारुणं हविः इष्टिश्च वारुणी वरुणो धर्मपति-रित्येवमादिषु वरुणस्योच्चैष्ट्वमेव । एकत्र( १=एक- )प्रदानासु[4] च वरुणस्योपांशुत्वमेव । यथा वरुण आदित्यवानित्यत्रोपांशु[5]देवतानां भूयस्त्वाचद्वदु[6]पांशुत्वम् ।

सर्वत्रेत्यनुच्यमानेऽन्वायात्यैककपाला वारुणवर्जमित्येक-सूत्रता स्यात् । तथा सति "सौमिक्यः । प्रायश्चित्तिक्यः" (२।१४) एवमादिषु वरुणस्योपांशुत्वं स्यात् । तन्मा भूदिति सर्व(१+त्र)-ग्रहणम् ॥

---

(१)-ष्टय-B² B³,-च-B¹.
(२) असमानासा-B¹.
(३) पूर्वा B¹; पूर्वं B³; पूर्व B².
(४) वरुण-B² B³; वरुणशब्द-B¹.
(५) एकत्र प्रदानासु B¹ B², एकत्र प्रधानासु B³.
(६)-पांशुत्व-B¹.
(७) तद्वदु-B²; नद्वद उ-B³; तत्वादु-B¹.

## सावित्रश्चातुर्मास्येषु ॥ ८ ॥

अत्र चातुर्मास्यग्रहणमुत्तरार्थम् । पुरोडाशश्चतुर्धा भवति उपांशु[1] ॥

## प्रधानहवींषि चैके ॥ ९ ॥

चातुर्मास्येषु प्रधानहवींष्येके उपांशिवच्छन्ति । अत्र तमः (?)-शब्दलोपो द्रष्टव्यः । प्रधानतमहवींषीत्यर्थः । वैश्वदेव्यां वैश्वदेवं हविः प्रधानतमम् । कस्मात् । समाख्यानादिष्टेः[2] । "प्रातर्वैश्वदेव्यां प्रेषितः" ( २।१५ ) इति । तथा वरुणप्रघासेषु वारुणम् । तथा माहेन्द्र्यामैन्द्रम् । शुनासीरीयायां शुनासीरीयम् । एषामध्वर्यूणां चातुर्मास्ये प्रधानहविषामुपांशुत्वमाम्नातं तदा तत्र प्रधानहवींषि[3] जानन्ति । तस्मात्प्रधानहविर्ज्ञानं तत्प्रत्ययमेव । यदि "सर्वत्र वारुणवर्जम्" ( २।१४ ) इति वरुणप्रघासेष्वपि वारुणस्योपांशुत्व नेष्यते, तथा ( १=तदा ) प्रधानहवींषि चैके ( २।१४ ) इत्युक्त्वा पुनः सर्वत्र वारुणवर्जमित्यवक्ष्यत् । यस्मादेवं नोच्यते । तस्मात्प्रधानहवींषि चैक इत्यस्मिन्पक्षे क्रियमाणे वरुणप्रघासेषु तु वरुणस्योपांशुत्वं वेति सिद्धम् ॥

---

( १ ) उपांशु B¹, उपांशुत्वं B² B³.

( २ ) इष्टेः B¹, इष्टः B² B³.

( ३ ) हवींष्येके B¹.

( ४ ) त B¹.

## पित्र्योपसदः सतन्त्राः ॥ १० ॥

एताः[1] समानतन्त्रेणो[2]पांशु भवन्ति । एतासां तन्त्रोपांशुत्वे "आवह देवान्यजमानाय", "आवह जातवेदः सुयजायज" ( १।३ ) इत्येतयोरावहशब्दयोरुपांशुत्वमेव ।[3] कस्मात् । कदाचिदपि देवतासम्बन्धाभावात् । "अन्येषामप्युपांशूनामावह स्वाहाऽयाट् प्रिया धामानीदं हविर्महो ज्याय इत्युच्चैः" ( १।३ ) इत्यावहादीनामुच्चैष्ट्वविधानं देवतासम्बन्धानामेवेति । स्विष्टकृति "यक्षदग्नेर्होतुः" ( १।६ ) "यक्षत्त्वं महिमानम्" ( १।६ ) इत्येतयोरयाट्शब्दविकारत्वादुच्चैष्ट्वमेवेति । यथा "आदद्घसत्करदिति" (३।८) एवमादीनामेकवचनान्तानां यद्विहितमुपांशुत्वं तेषां[4] द्विवचनबहुवचनान्तत्वेऽपि तद्भवत्येव, तद्वदिहापि पित्र्यायां "देवा आज्यपा आज्यमजुषन्त" ( १।९ ) इत्यत्राज्यपशब्दस्येदंहविःस्थानीयत्वादुच्चैष्ट्वमिति ॥

## पौनराधेयिकी च प्रागुत्तमादनुयाजात् ॥ ११ ॥

प्रागुत्तमादनुयाजादिति वचनात्सूक्तवाके तान्त्रिकाणां देवतानां पूर्वमुपांशुप्रयुक्तानामप्युच्चैष्ट्वं भवति ।

---

( १ ) B¹; ताः B² B³.
( २ ) B¹,-तंत्रेणो-B²,-तन्त्रेण्यो-B³.
( ३ ) B¹; इत्यावाहना-B² B³.
( ४ ) तेषां omitted in B¹.

तत्रैतस्स्यात्। "यथावाहितमनुद्रुत्य देवताः" (१।५) इति वचनादावाहनोपांशुप्रयुक्तत्वात्तान्त्रिकाणां देवतानां सूक्तवाकेऽप्युपांशुत्वमेव भवतीति।

तन्न। कथम्। "यथावाहितमनुद्रुत्य देवताः" इत्यस्य वचनस्यान्योऽर्थः। तस्य प्रयोजनं प्रागुक्तम्। स्वरस्तु तत्र यथावाहितमेव भवतीत्येतदवश्यमेवाभ्युपगन्तव्यम्। इतरथा प्रकृतावपि मन्द्रस्वरेणावाहितत्वाद्यथावाहितमिति वचनात्स्विष्टकृत्सूक्तवाकयोरपि देवतानां मन्द्रस्वर एव स्याद् यथावाहितत्वादिति। तच्च नेष्यते। तस्मान्नायमर्थः। प्रधानहविषि त्वग्न्याधेयहविषो[1] विध्यन्तरेण सूक्तवाक उपांश्वेव भवतीति सिद्धम्॥

[अपि वा सुमन्द्रतन्त्राः॥ १२॥]
आगूःप्रणववषट्कारा उच्चैः सर्वत्र॥ १३॥

प्रणवागूर्वषट्कार (१=रा) इति आगूर्वषट्कारप्रणवा इति वा वक्तव्ये आगूर्वषट्कारयोरेकमन्त्रगतत्वात्[3] सहचरितयोर्मध्ये प्रण-

(१)-हविषो B² B³,-हविष इति B¹.
(२) B² B³,-वाकेप्यु- B¹.
(३) एकमंत्रगतत्वात् B¹. एकमंद्रत्वात् B² B³.

वस्य निपातनं माग्वर्पट्कारसम्बन्धस्यानुवाक्याप्रणवस्योच्चैष्ट्वार्थम्[1]।

अक्रियमाणे तु सर्वत्रग्रहणेऽनन्तरत्वात्पित्र्यादिषु तिसृष्वेवायं विधिः स्यात् । तन्मा भूत्, कथं सर्वत्र स्यादित्येतदर्थं सर्वत्र[3]ग्रहणम् । केचित्तु सर्वत्रग्रहणात्सामिधेनीप्रणवादीनामुच्चैष्ट्वविधानं मन्यन्ते । तस्य ज्ञापकम् "आसीनैः प्रथमामन्वाहोपांशु सप्रणवाम्" ( २।१६ ) इत्येवमादिषु सप्रणवग्रहणम् ।

तत्राप्यनेन सूत्रेण प्रणवस्योच्चैष्ट्वे प्राप्ते तन्निवृत्त्यर्थं सप्रणवग्रहणमिति तस्योपांशुत्वं विदधद् ज्ञापयति—अनुवाक्याप्रणवानामप्यनेनोच्चैष्ट्वमेव[5] भवतीति । इतरथा तत्र प्रणवग्रहणमनर्थकं स्यादिति ॥

## तथाग्रयणेऽप्यम् ॥ १४ ॥

तथाशब्दः प्रकारवाची । तेनैव प्रकारेणोच्चरित्यर्थः । प्रथमं हविरैन्द्राग्नं वाग्नेन्द्रं वोच्चैर्भवतीति । श्यामाकेष्ट्यां तु सोमस्यैकस्य सर्वतोऽप्युच्चैरेव भवति । कुतः । "आद्यन्तवदेकस्मिन्"

---

(१)-स्य निपातन-B², -स्य निपात-B¹; -स्यानिपातन-B³.

(२)-स्योच्चैष्ट्वार्थम् ( with marks like --- on-च्चै- ) B¹ -स्योहार्थं B² B³.

(३) सर्व-B² B³;

(४) तस्य ज्ञापकमासीनः B² B³; ज्ञापकमानिनः B¹.

(५) अनेनोच्चैष्ट्वमेव B¹; अनेनैवोच्चैष्ट्वमेव B² B³.

(अष्टाध्यायी १।१।२१) इति। ननु भो एषा परिभाषा क्व व्याकरणे उक्ता इहापि भवतीति। उच्यते। भवति। किं कारणम्। आचार्येण तु पाणिनिना न्यायमवेक्ष्य कृता सा परिभाषा लोकवत्। यथा लोके प्रथमगर्भेणैव हता बालेत्येकस्मिन्नेव गर्भे प्रथमशब्दः प्रयुज्यते, अन्यत्र तु द्वितीयं तृतीयं दृष्ट्वा। तद्वदिहाप्येकस्मिन्नग्रयशब्द[1] उपपद्यत एव ॥

## आहार्यस्तु प्राणसन्ततः प्रणवः पुरोनुवाक्यायाः ॥ १५ ॥

आहार्यः। अधिकमाहर्त्तव्य[2] ऋगन्तविकारे। तस्मादिह "स्वरादिमृगन्तम्" (१।२) इत्येतन्न[3] भवति। सर्वामृचं निरवशेषेणोक्त्वा पुनः प्रणवः[4] कर्त्तव्य इति। उदाहरणम् "वयं स्याम पतयो रयीणाम्। ॐ" (ऋ० १०।१२१।१०) एतदादिषु।

पुरोनुवाक्याया इत्यनु[5]च्यमाने विशेषेण[6] विधानाच्चन्द्रोपांशुषु

(१) एकस्मिन्नग्र्यशब्द B[1]; एकस्मिन्नेव शब्दो B[2]; एकस्मिन्नेव शब्दे B[3].

(२) B[1]; अधिकं हर्तव्य' B[2], अधिकर्तव्यः। B[3].

(३) B[1]; एवं न B[2] B[3].

(४) B[1]; प्रणवः omitted in B[2] B[3].

(५) B[1]; इत्यु-B[2] B[3].

(६) B[2] B[3]; विशेषण-B[1].

सामिधेनीप्रणवानामप्युपांशूनां सतामप्ययं[1] विधिः स्यात् । तन्मा भूदित्यनुवाक्याग्रहणम् ।

ये पुनः सामिधेनीप्रणवानामप्युच्चैष्ट्व[2]मिच्छन्ति तेषामपीह पुरोनुवाक्याग्रहणात्सामिधेनीप्रणवेष्वयं विधिर्न भवति । तथा सत्युपसत्सु "यो नो नेदिष्ठमाप्योम्[3]" (ऋ० ७।१५।१) इत्यत्र प्रणव ऋगन्तविकारे[4] भवति । तस्मादोंकारस्याङ्गभावा[5]दोंकारस्योच्चैष्ट्वादस्याप्युच्चैष्ट्वं भवति। तस्माद् "यो नो नेदिष्ठमाप्यम्" इत्येतावदुक्त्वाप्योमुच्चैः[6] कुर्वन्ति ॥

## तथाऽऽगूर्वषट्कारौ याज्यायाः ॥ १६ ॥

याज्या[7]ग्रहणं प्रैषादेर्मा भूदित्येतदर्थम् । यथा प्रैषादिरस्यागू(१)र्धर्म[8] लभेतेति[9] "प्रैषादिरागुरः स्थाने" (३।८) इत्यत्र विभावयिष्यामः ॥

---

(१) अप्ययं B¹; अव्ययं B² B³;

(२) अप्युच्चै-B² B³; उच्चै-B¹.

(३) आप्योम् B² B³; आप्यम् B¹.

(४) ऋगंतविकारे B¹; ऋगंते विकार्यं B²; ऋगंतविकार्यं B³.

(५)-भावा-B¹,-भावाभावा-B² B³.

(६) उक्त्वाप्योमुच्चैः B¹; उक्त्वोच्चैः B² B³.

(७) याज्याया B³ (lacuna in B²).

(८) B³ B¹; अस्यागुधर्मं B².

(९) लभेतेति B² B³; लभतेति B¹.

## तन्त्रस्वराण्युपांशोरुच्चानि ॥ १७ ॥

यत्र सुमन्द्रेण[1] तन्त्रं नैमित्तिकं वा भवति तत्रावहादीनामतन्त्रत्वात्तन्त्रस्वरो न प्राप्नोति । आह–कुतो न तन्त्रत्वं तेषामावहादीनां भवतीति । उच्यते । यत्सकृदेव प्रयुज्यमानं सर्वेषां प्रधानानामुपकरोति दीपवत् । यथा दीप एकः सन् बहूनामपि नायकानामेकत्र समवेतानां स्वार्थप्रकाशं[2] साधयति तद्वत्[3] तन्त्रेणापि भवितव्यम् । आचार्योऽपि वक्ष्यति "तन्त्राणां व्यापित्वात्" ( १२।१० ) इति । तस्माद्व्यापि तन्त्रमित्यवगम्यते । यत्तु प्रति प्रधानमावर्तते गन्धमाल्यादिवत् स आवापः । यस्मादावह स्वाहायाळिति[4] प्रतिदेवतमावर्त्तते तस्मात्तेषामतन्त्रत्वम्[5] । अतन्त्रत्वाच्च तन्त्रस्य यः स्वरो विहितः स एतेषां न प्राप्नोति। तथा सति "आतो मन्द्रेण" (१।२५) इत्येवमादयः प्राकृता एव स्वराः प्राप्नुवन्ति । तस्मात्तेषामतन्त्राणां[6] सतामपि तन्त्रस्वर एव प्राप्नुयादित्येतदर्थं वचनम् ।

आह । कानि पुनस्तानि उपांशोरुच्चानीति । उच्यते । "अन्येषामप्युपांशूनामावह स्वाहायाट् प्रिया धामानीदं हविर्महो ज्याय इत्युच्चैः"

---

( १ ) सुमंद्रेण B² B³; सुमंद्रण B¹.
( २ ) B¹; स्वार्थं प्रकाश्य B², स्वार्थप्रकाश्य B³.
( ३ ) तद्वत् omitted in B².
( ४ ) B¹; स्वाहादि B² B³,
( ५ ) B¹, अतन्त्रत्वम् । omitted in B² B³,
( ६ ) तेषामतंत्राणां B¹; तेषां मंत्राणां B² B³.

(१।३) इत्यत्रोक्तानि च "आगूःप्रणववषट्काराः (!+उच्चैः) सर्वत्र"( २।१४ ) इति च ॥

## मन्द्राण्युपांशुतन्त्राणाम् ॥ १८ ॥

तन्त्रोपांशुषु पूर्वेण वाक्येनाश्रहादीनामप्युपांशुत्वं प्राप्नोति । अ-थवा तेषामुच्चैष्ट्वस्य प्रतिपदविधानादुपांशुत्वं निवर्तेत[2], प्राकृता वा[3] स्वराः प्राप्नुयुः "आतो मन्द्रेण" ( १।२५) इत्युक्ताः । तदु-भयं नेष्यते । त[4]स्मादेतद्वचनमारभ्यते "मन्द्राण्युपांशुतन्त्राणाम्" इति॥

( इति द्वितीये चतुर्दशी कण्डिका )



(१) चागूः $B^1$; पागूः $B^2$ $B^3$.
(२) निवर्तेत $B^2$ $B^3$; न वर्तेत $B^1$.
(३) वा $B^1$; एव $B^2$ $B^3$.
(४) त-$B^2$ $B^3$; य-$B^1$.

अथ द्वितीये पञ्चदशी कण्डिका

## प्रातर्वैश्वदेव्यां प्रेषितोऽग्निमन्थनीया अन्वाह पश्चात्सामिधेनीस्थानस्य पदमात्रेऽवस्थायाभिहिङ्कृत्य ॥ १ ॥

"पूर्वेद्युर्वैश्वानरपार्जन्याम्" ( २।१४ ) इत्यत्र पूर्वेद्युर्ग्रहणादेवापरेद्युर्वैश्वदेव्या[1] भवितव्य[2]मित्यर्थादेव सिद्धेऽपि पुनरिह प्रातर्ग्रहणं नियमार्थम् । कथम् । पूर्व[3]मिष्टयादिषु पर्वग्रहणेन पर्व[4] प्रतिपदा उभे अपि गृह्येते इति । तस्मादिहाप्युभयोः प्राप्तयोः[5] प्रतिपद्येव[6] वैश्वदेवी कर्त्तव्या न पर्वणीति नियमार्थं प्रातरित्युच्यते । तस्मात्पर्वणि वैश्वानरपार्जन्ये इति ( १=न्येति )[7] सिद्धम् ।

प्रेषित इति वचनं वैराज[8]स्तोत्रे हिङ्कृत उद्गातुर्दक्षिण ऊरौ

---

(१) -देव्या B² B³;-देवो B¹.
(२) -तव्य-B¹; -तव्यार्थ-B² B³.
(३) पूर्वम् omitted in B² B³.
(४) पर्व B¹; पूर्व B² B³.
(५) प्राप्तयोः omitted in B¹.
(६) B¹, प्रतिपद्येतेव B² B³.
(७) -पार्जन्ये इति B¹ B², -पार्जन्यो इति B³.
(८) विराज-B².

शकलेनाग्निं[1] मन्यतीत्यत्र सम्प्रैषाभावादग्निमन्थनीया मा[2] भूवन्निति प्रेषितग्रहणम् । अथवा[3] प्रातरिति निमित्तोपदेशादप्रेषितोऽपि प्रातरनुब्रूयात्तन्निवृत्त्यर्थम् ।

पदमात्र इति मात्रशब्दः समीपवाची । पदादीपन्न्यूनेऽधिके वा नास्ति दोष इति ॥

[ अभि त्वा देव सवितर्मही द्यौः पृथिवी च नस्त्वामग्ने पुष्करादधीति तिसृणामर्धर्चे शिष्टारम्भेदा सम्प्रैषात् ॥ २ ॥ ]

अन्यत्राप्यन्तर्ऋचोऽवसाने ॥ ३ ॥

अन्तर्ऋचः ऋङ्मध्य[4] इत्यर्थः । अन्तर्ऋच इति वचनाद्धर्मे "ऋचमृचमनवानन्नुक्त्वा प्रणुत्यावस्येत्" ( ४।६ ) इत्यत्रानृङ्[5]मध्यावसानादयं[6] विधिर्न भवति ॥

अजायमाने त्वेतस्मिन्नेवावसानेऽग्ने हंसि

---

( १ ) B¹; शकलेर्ग्नि B² B³.
( २ ) मा omitted in B³.
( ३ ) अथवा B¹; अथ B² B³.
( ४ ) B¹;–मध्यमे B²;–मध्यामे B³.
( ५ ) अनृङ्–B¹; ऋङ् B² B³.
( ६ ) -सानादय B² B³;-सानं अयं B¹.

न्यात्रिणामिति सूक्तमावपेत पुनः पुन-
राजन्मनः ॥ ४ ॥

एतस्मिन्नेवावसान[1] इति नियमार्थम् । कथम् । जाते श्राविते तु पुनरनुगमनं भवतीति[2] चेत्, पुनर्मन्थने यदि चिरं जायेत तदापि पुनर्नाविपितव्यम्[3] । अथवा प्रकृतिरियमाचार्यस्य यत्रावसानद्वयं प्रणवेनानन्तर्हितं सन्निपतति तत्र यत्नान्तरं[4] करोति । यथा "पञ्चर्यां त्रिरवस्येदर्द्धर्चेऽर्धर्चे" (५।१०) इति । एतस्मिन्नक्रियमाणे[5]ऽप्यर्द्धर्चेऽप्यर्द्धर्चे[6]ऽवसानमाम्नातमेव[7] सिद्धम् । तथापि ब्रवीत्येव । तद्वदिहापीति न[8] दोषः ।

सूक्तग्रहणेऽक्रियमाणे[9] पादग्रहणाद्भ्रमवति । तन्मा भूदिति सूक्तग्रहणम् । आह । यद्येवमग्ने[10] हंसीति हीनपादग्रहणं[11]मेव

(१) B¹, तस्मिन्नेवासन B² B³.
(२) भवति B³, भवात B².
(३) -तव्या B³.
(४) B¹, यत्नानंतरं B³, यत्नानंतर्हितं B²
(५) -न्नक्रियमाणे B¹, -न् क्रियमाणे B² B³.
(६) अर्द्धर्चेऽप्यर्द्धर्चे B¹, अर्धर्चेपि B².
(७) आम्नातं एव B², आम्नात एव B¹
(८) इहापीति न B¹, इहापि ति B².
(९) -प्यर्द्धर्चेऽपि to-माणे omitted in B³.
(१०) यद्यवमग्ने B¹, मध्येग्नि B², मध्येग्ने B³.
(११) -पादग्रहण-B¹,-तापादशब्द-B² B³.

कर्त्तव्यम्, यथा[1] "अग्ने हंस्यग्निं हिन्वन्तु नः" ( ४।१३ ) इति । तद्वदिहापि । उच्यते । समस्तपादग्रहणं प्रथमे पर्याये समाप्ते वा यद्यग्निर्जायेत तदा सूक्तस्य खण्डितस्याप्यावापो भवतीति ज्ञापनार्थम् । इतरथा सकृदप्यसमाप्त एव यदि जायेत तदा सूक्तस्य सकृत्समापनं कर्त्तव्यमिति कृत्वा शेषं समापयेदेव । तन्मा भूदिति समस्तपादग्रहणम् ।

आह । एतस्माद्यत्नादृतेऽपि सूक्तसमापनं नैव भवति । कुतः । "जातं श्रुत्वानन्तरेण प्रणवेन शिष्टमुपसन्तनुयात्" ( २।१५ ) इति वचनात् । उच्यते । एतस्य द्वितीयादिषु पर्यायेषु कृतार्थत्वात् प्रथमे पर्याये सूक्तशेषस्य समापनमेव स्यात् । तन्निवृत्त्यर्थं समस्तपादग्रहणम् ।

आजन्मन इत्यनुच्यमाने जातेऽपि व्यग्रतयाऽध्वर्युर्यदि संप्रैषं न ब्रूयात्तदा ओं[2] संप्रैषादावपनं च[3] भवति । तन्मा भूत् । जात एव विरमेदित्येतदर्थमाजन्मन इत्युच्यते ।

पुनःपुनरित्यनुच्यमाने सकृदेवावसानं स्यात् । तन्मा भूदिति पुनःपुनरिति वचनम्[4] ।

---

( १ ) B¹; तथा B² B³.
( २ ) B¹; ओं omitted in B² B³.
( ३ ) B¹; च omitted in B² B³.
( ४ ) वचनम् B¹, उच्यते B² B³.

आह । यद्येतम् ( १=एवम् or एतद् ), एवं न कर्त्तव्यम्, आ जन्मन इति सिद्धत्वादिति । उच्यते । नैतावता पुनःपुनरावृत्तिर्भवति । आ जन्मन इति वचनात्तु शनैः शनैर्विरम्य सकृदेवावपनं स्यात् । तन्निवृत्त्यर्थं वचनम् ।

अथवा ( १+पुनः ) पुनरित्यनुच्यमाने आ जन्मन इति वचनात्सूक्तादुत्तरा[१] अप्यृच आवपेत् । तन्निवृत्त्यर्थं[२] पुनः पुनरित्युच्यते । सूक्तग्रहणादुत्तरासामारम्भो न भवतीति चेत्, तन्न । सूक्तग्रहणं त्वन्या[?]म् । पादग्रहणादृचि माप्तायां तन्निवृत्त्यर्थमिति ।

आह । एवमपि पुनः पुनः सूक्तमावपेतेत्येतदुभयमपि न वक्तव्यम्, सूक्तमावर्त्तयेदित्येवमेव वक्तव्यम् । यथा "ईळेद्यावीयमावर्त्तयेदा तमसोपघातात्" ( ४।१५ ) इति । उच्यते । नैष दोषः । तत्र तु ईळेद्यावीयस्य पूर्वमपि विद्यमानस्यावृत्तिमात्रमेव विधीयते । इह तु पुनः पुनरग्ने हंसीत्येतस्य सूक्तस्य पूर्वमविद्यमानस्य प्राप्तिश्च तस्यैवावृत्ते( १=त्ति )श्चेत्येतदुभयं विधेयम् । तस्मादेवमुभयोरतुल्यत्वादिह पुनः पुनरावपेतेत्युभये( १ )त्युच्यते ॥

## जातं श्रुत्वानन्तरेण प्रणवेन शिष्टमुपसन्तनुयात् ॥ ५ ॥

( १ ) उत्तरा B², उत्तरात्-( sic ) B¹.
( २ ) पुनरित्यनुच्यमाने आ जन्मन to-र्थं omitted in B³

अनन्तरे[1] ऽयेत्येतावत्येवोच्यमाने मणुवेनेत्यनुच्यमाने यदा प्रथमेऽर्द्धर्चे जातः स्यात्[2] ( १=जातस्य ) श्रावणां तदानन्तरेऽयेति .. नात् प्रथमेनैवार्द्धर्चेन शिष्टस्योपसन्तानः[3] स्यात्, उपसंतानवचनेन गतेऽपि प्रणवो भवतीति[4]। तन्मा भूत्। योऽनन्तरः पूर्वमसिद्धः तेनैवोपसन्तनुयादित्येतदर्थं मणुवग्रहणम् ॥

## शिष्टेनोत्तराम् ॥ ६ ॥

इयमपि प्रकृतिराचार्यस्य यत्र तु संतानद्वयस्यावसानेनानन्तर्हि तस्य संनिपातो भवति तत्र यत्नं करोति । यथा "उपसंतनुयादेकपदाः । ताभ्यश्चोत्तराः" (६।५) इति । तद्वदिहापीति ॥

[ उत ब्रुवन्तु जन्तव आयं हस्तेन खादिनमित्यर्धर्च आरभेत् ॥ ७ ॥ ]
[ प्र देवं देववीतय इति द्वे अग्निनाग्निः समिध्यते त्वं ह्यग्ने अग्निना तं म-

---

( १ ) अनंतर्ये-B[1].

( २ ) जातः स्यात् B[1]; जातः स्या B[2]; जातेः स्या B[3].

( ३ )-तानः B[1];-तान B[2];-तानं B[3].

( ४ ) उपसन्तानवचनेन ( -वचने वचनेन B[2] ) गतेऽपि प्रणो भवतीति B[2] B[3]; उपसन्तान गते प्रणो भवतीदी ( with marks of doubt on-न्व-and दी ) B[1].

जेयन्त सुक्रतुं यज्ञेन यज्ञमयजन्त देवा
इति परिदध्यात् ॥ ८ ॥ ]
सर्वत्रोत्तमां परिधानीयेति विद्यात् ॥९॥

पशुबहुत्वे[1] परिव्ययणीयायां त्रिरुक्तायां पुनरपि परिव्ययणीयायाः संप्रैषवशादावृत्तौ तत्रापि त्रिर्ब्रूयादित्येतदर्थमेतदारभ्यते। इतरया अनुवचनमसमाप्तमिति कृत्वा पूर्वं परिव्ययणीयायां सकृदेव ब्रूयात्। तन्मा भूत्। पूर्वं त्रिरेव ब्रूयादित्येतदर्थम् ॥

[ धाय्ये ॥ १० ॥ ]
[ विराजौ ॥ ११ ॥ ]
नव प्रयाजाः ॥ १२ ॥
प्रागुत्तमाच्चतुर आवपेत ॥ १३ ॥

चतुरः प्रयाजानावपेतेत्येवमुच्यमाने नवत्वे सिद्धे पुनर्नवेति वचनं वरुणप्रघासादिषु प्रयाजानुयाजानां नवत्वमनित्यमित्येतदर्थम्। तस्मात्तत्र पञ्च[3] प्रयाजा अपि विकल्पेन भवन्ति ॥

[दुरो अग्न आज्यस्य व्यन्तूषासानक्ताग्न

(१) तु added in B[1].
(२) म-deleted in B[3].
(३) B[1], पञ्च omitted in B[2] B[3].

आज्यस्य वीतां दैव्या होताराम
आज्यस्य वीतां तिस्रो देवीरम
आज्यस्य व्यन्त्विति ॥ १४ ॥]

[ अग्निः सोमः सविता सरस्वती पूषा
मरुतः स्वतवसो विश्वेदेवा द्यावा-
पृथिवी ॥ १५ ॥ ]

[ आ विश्वदेवं सत्पतिं वाममद्य सवि-
तर्वाममु श्वः पूषन्तव व्रते वयं शुक्रं ते
अन्यद्यजतं ते अन्यदिहेहवः स्वतवसः
प्र चित्रमर्कं गृणते तुरायेति॥ १६ ॥]

[ नवानुयाजाः ॥ १७ ॥ ]

[ षड़ूर्ध्वं प्रथमात् ॥ १८ ॥ ]

[ देवीर्द्वारो वसुवने वसुधेयस्य व्यन्तु ।
देवी उपासानक्ता वसुवने वसुधेयस्य
वीताम् । देवी जोष्ट्री वसुवने वसुधे-
यस्य वीताम् । देवी ऊर्जाहुती वसुवने
वसुधेयस्य वीताम् । देवा दैव्या हो-
तारा वसुवने वसुधेयस्य वीताम् ।

देवीस्तिस्रस्तिस्रो देवीर्वसुवने वसुधे-
यस्य व्यन्त्विति ॥ १९ ॥ ]

अनुयाजानां सूक्तवाकस्य शंयुवाकस्य
वोपरिष्टाद् वाजिभ्यो वाजिनमनावा-
ह्यादेशम् ॥ २० ॥

वाजिभ्य इति सिद्धेऽपि वाजिनमिति वचनमन्यस्य कर्मसमुदायस्य संज्ञार्थम् । तच्च संव्यवहारार्थम् । "आज्यभागप्रभृति वाजिनान्ता" ( ६।१४ ) इत्येवमादिष्वपि भक्षणान्तं[1] सर्वमिदं कथं स्यादिति। इतरथा चोदनाभेदा (१=-द) इति कर्मान्तरमिति कृत्वैतद्विधानमन्यस्मिन्वाजिने न प्राप्नुयात्। तत्र "अदृष्टादेशे नित्ये" (२।१) इति याज्यानुवाक्ये एव प्राप्नुयाताम् । तन्मा भूत् , इहोक्तं सर्वं[2] कथं प्राप्नुयादिति, आदेश इति वचनमुक्तप्रयोजनम् ॥

[ शन्नो भवन्तु वाजिनो हवेषु वाजे
वाजेऽवत वाजिनो न इत्यूर्ध्वज्ञुरनवानं
याज्याम् ॥ २१ ॥]

अग्ने वीहीत्यनुवषट्कारो वाजिनस्याग्ने
वीहीति वा ॥ २२ ॥

---

( १ )-णान्तं B³,-णान्त B²,-णार्थं B¹.
( २ ) सर्वं B¹, सत्वं B², सद्वत्वं B³.

अनुवषट्कारस्योर्ध्वंहुरनयानमित्येतन्न भवति । कुतः । यद्यनुवषट्कारस्याप्यूर्ध्वंहुरनयानमित्येतदिष्टं स्यात्, अनुवषट्कारमपि विधाय पश्चादेतदवक्ष्यत् । यस्मादेवं नोच्यते तस्मादनुवषट्कारस्योर्ध्वहुता न भवति ॥

## यत्र क्व चैकसंप्रैषे द्वौ वषट्कारौ समस्तावेव तत्र द्विरनुमन्त्रयेत ॥ २३ ॥

इहैकसंप्रैष इत्यध्वर्योरेव संप्रैषसंप्रत्ययो न मैत्रावरुणस्य । कुतः । मैत्रावरुणप्रैषचोदने नैव क्वचिदपि संप्रैषचोदनात्[1] तस्माद् द्विदेवत्ये "(१ इ )न्द्रघृतवीनम्" (१) इत्यत्र यद्यपि मैत्रावरुणो द्विः प्रेष्यति तदाप्यध्वर्युसंप्रैषस्यैकत्वात्समस्तानुमन्त्रणमेव[3] कर्त्तव्यम् । किञ्चान्यत्, यत्रैकसंप्रैष इति सिद्धेऽपि क्व च ग्रहणमप्येतदर्थमेव, यत्रान्यतरस्यानेकसंप्रैषत्वमन्यतरस्यैकसंप्रैषत्वमित्युभयं भवति[4] तथाप्येकसंप्रैषकार्यमेव कथं स्यादित्येतदर्थं क च ग्रहणमिति ॥

## न चागूरुत्तरस्मिन् ॥ २४ ॥

---

(१)-चोदनात् $B^1$;-चोदना $B^2$ $B^3$.

(२) द्विदेवत्येंद्रं घृता-$B^2$ $B^3$; द्विदेवत्येद्र--$B^1$.

(३) समस्तानुमन्त्रणमेव $B^2$ $B^3$, समंत्रणमेव $B^1$.

(४) त-$B^2$ $B^3$; य-$B^1$.

ऐन्द्रवायवे "एकागुरे" (५।५) इत्येवोत्तरस्मिन्नागुरः प्रतिषेधस्य सिद्धत्वान्न चागूरि[1]त्येतदनुवषट्कारार्थमेव क्रियते। आह। एवं चेत्तन्न[2] वक्तव्यम्। कुतः। अनुवषट्कारस्य याज्यासंज्ञाभावादेव याज्यादौ विहिता नैवागूः[3] प्राप्नोति। उच्यते। सत्यमेतत्। इदं तु प्रयोजनम्। अनुवषट्कारे च कथं(?)याज्याधर्मा[4]णामन्येषामेकश्रुतियाज्यान्तप्लुतवषट्काराणां प्राप्तिः कथं स्यादित्येतदर्थम्॥

अथवा एतेषां वाक्यानामपरां योजनां वक्ष्यामः।

## अग्ने वीहीत्यनुवषट्कारो वाजिनस्याग्ने वीहीति वा ॥ २२ ॥

अग्ने वीहीत्यनुवषट्कारश्चेत्युच्यमाने[5] (?)। वाजिनस्याग्ने वीहीति वेति।

आह। अनुवषट्कार इत्येतयोः संज्ञा उताहो अर्थ[6] कृतिरिति[7]।

---

(१) न चागूरि-B[1]; न चागु (-इुर्ं for-गु-in B[3]) रित्येत स्मिन्नि (-नि in B[3]) B[2] B[3].

(२) एतन्न B[1].

(३) नैवागुरः B[1].

(४)-धर्मा-B[2];-र्माध-B[3],-कर्म-B[1].

(५) B[1],-वषट्कारे उच्यते B[2] B[3].

(६) अर्थ-B[2] B[3], अर्द्धा-B[1]

(७)-रिति omitted in B[1].

यदि संज्ञा स्यादेकश्रुत्यन्तप्लुत्यादयो याज्याधर्मा न प्राप्नुवन्ति । पुनरन्ते[1] वषट्कारश्चेति । उच्यते । अथा ( १=अर्थ )कृतिरेषा[2]। कथम् । पूर्वकृतं वषट्कारं पुनरपि कारयतीत्यनुवषट्कार इति । कथम् । एताभ्यां मन्त्राभ्यां द्वितीयो वषट्कारः कर्तव्य इत्येवमेतौ मन्त्रौ याज्यास्थानीयौ भवतः । तेन याज्याधर्माः प्राप्नुवन्ति । पुनरन्ते वषट्कारश्चेति । तत्र कश्चिद् ब्रूयात् किं वषट्कारस्य याज्या करणभूतेति । उच्यते । करणभूता यथा श्रुतौ[3] "नर्तुप्रैपैः[4] वषट्कृत्यम्" इति । ततश्च[5] गम्यते याज्यास्थानीयावेताविति । यदयं न चाग्नूरस्वरस्मिन्निति आगुरः प्रतिषेधं करोति तज्ज्ञापयति याज्यैवेयमिति । इतरथा यद्यनुवषट्कारो याज्या न स्यात्तस्मिन्नागुरः प्रतिषेधोऽप्यार्थकः स्यात् । कुतः । अप्राप्तत्वात् । तस्माद्याज्यैवेति सिद्धम् ॥

## यत्र क्व चैकसंप्रैषे द्वौ वषट्कारौ समस्तावेव तत्र द्विरनुमन्त्रयेत ॥ २३ ॥

अत्र केचिदैन्द्रवायवग्रहे समस्तानुमन्त्रणं कुर्वन्ति । कुतः ।

---

( १ ) अन्ते B¹; अन्तरा B² B³.
( २ ) एषा B¹; एतेषां (-षा B³ ) B² B³.
( ३ ) यथा श्रुतौ B¹; यथाश्रुति B² B³.
( ४ ) प्रैपै-B¹.
( ५ ) ततश्च B² B³; तच B¹.

अध्वर्युप्रैषैक[1]त्वादेकसम्प्रैषक[2] इति यदन्तः । तन्न । कुतः । याज्याया धर्मभेदात् । कथम् । काश्चिद् याज्या अध्वर्युसंप्रैषेणोच्यन्ते, काश्चित्पुनः "अध्वर्युप्रेषितो (१ + मैत्रावरुणः प्रेष्यति । प्रैषैर् ) होतारम्" ( ३।२ ) इति मैत्रावरुणप्रैषेणोच्यन्ते । यस्मान्मैत्रावरुणेन[3] द्विःप्रेषितो यजति[4] तस्मात्पृथगनुमन्त्रणेन भवितव्यमिति। किञ्चान्यत्। आचार्यप्रवृत्तिश्च ज्ञापयति तत्रैन्द्रवायवे एक[5]संप्रैषत्वं न भवतीति, यदयम् "न चागूरुत्तरस्मिन्" ( २।१५।) इत्यागुरः प्रतिषेधे सिद्धेऽपि "एकागुरे" ( ५।५ ) इति ब्रवीति । तस्मात्सिद्धम् ॥

वाजिनभक्षमिळामिव प्रतिगृह्योपहवमिच्छेत ॥ २५ ॥

अध्वर्य उपह्वयस्व ब्रह्मन्नुपह्वयस्वाग्नीदुपह्वयस्वेति ॥ २६ ॥

अञ्जलिना प्रतिगृह्येत्येवमुच्यमाने सिद्धेऽपि इळामिवेति वचनमास्यसंमितां प्राशसम्मितामित्युपयमनमपीळावत्कथं स्यादित्ये-

---

( १ )-प्रैषैक-$B^2$ $B^3$, प्रैषक-$B^1$.

( २ ) एकसम्प्रैषक $B^3$, एकसम्पेषक $B^2$, एर संप्रैषक $B^1$.

( ३ ) मैत्रावरुणेन $B^1$, मैत्रावरुणो $B^2$ $B^3$

( ४ ) यजति $B^2$ $B^3$; यजती हि $B^1$.

( ५ )-वायवे एक-$B^1$;-वायवैक-$B^2$ $B^3$.

तदर्थमिळामिवेत्युच्यते । इळामिवेति वचनात्स्पृष्टोदकं[1] प्रतिगृह्णाति ॥

केचित्तु[2] यजमान उपह्वयस्वेति चान्ते पाठ[3]मिच्छन्ति ॥

[यन्मे रेतः प्रसिच्यते यद्वा मे अपि गच्छाति यद्वा जायते पुनः । तेन मा शिवमाविश तेन मा वाजिनं कुरु । तस्य ते वाजिपीतस्योपहूतस्योपहूतो भक्षयामीति प्राणभक्षं भक्षयेत् ॥ २७ ॥]

एवमध्वर्युर्ब्रह्माग्नीध्रः ॥ २८ ॥

एवमध्वर्युरित्यध्वर्युभक्षणविधानं क्रमार्थम् । अध्वर्युणा भक्षितेऽपि ब्रह्मा भक्षयेदिति । अथवा अध्वर्यवे उपहवं दद्यादित्येतदर्थम् । कथं देयमिति चेद्यथा तस्मादुपहवः प्राप्तो होत्रा तथैवेति ।

[ यजमानः प्रत्यक्षम् ॥ २९ ॥ ]

इतरे च दीक्षिताः ॥ ३० ॥

यजमानादितरे ये होत्रादयश्च दीक्षिताः[4] प्रत्यक्षं भक्षयेयुरि-

---

(१) स्पृष्टोदकं B[1], कथं B[2] B[3].
(२) केचित्तु B[2] B[3], केचित् B[1].
(३) पाठ-B[1]; त-B[2] B[3].
(४) दीक्षिताः B[1]; दक्षिणतः B[2] B[3].

ति । यजमानत्वादेतेषां प्रत्यक्षभक्ते सिद्धेऽपि पुनर्विधानमार्त्विज्येन मार्गं प्राणभक्त ( १ = क्षणं ) होत्रादीनां मा भूदिति । एतदेव ज्ञापकं दीक्षितानां[1] मप्यार्त्विज्यव्यापृतानामप्यार्त्विज्यया[2]-जमानयोर्विरोधे ह्यार्त्विज्यमेव बलीय इति[3] ॥

## पौर्णमासेनेष्ट्वा चातुर्मास्यव्रतान्युपेयात् ॥३१॥

चातुर्मास्यग्रहणं यावच्चातुर्मास्यानां परिसमाप्तिस्तावदेतानि व्रतानि धारयितव्यानि कथं स्युरिति । अथवा चातुर्मास्येष्वेव तानि भवन्ति नान्यत्रेति । इतरथा "अत ऊर्ध्वमाहिताग्निर्व्रतचार्या होमात्" ( २।२ ) इत्यत्रापि केशनिवर्तनादीनि प्राप्नुयुः । तन्मा भूदिति वचनम् ।

व्रतानीति वचनं निवर्तनवास ( १ = प ) नयो[4]रपि व्रतसंज्ञार्थम् । संज्ञाप्रयोजनं "व्रतान्युपेत्य व्रतपतये" ( ३।१३ ) इत्यत्र ॥

## केशान्निवर्तयीत ॥ ३२ ॥
## श्मश्रूणि वापयीत ॥ ३३ ॥
## अधः शयीत ॥ ३४ ॥

---

( १ ) दीक्षितानां-B¹; दक्षिणतो न-B²; दक्षिणातो न B³.
( २ ) या-B¹; य- B² B³.
( ३ ) B¹ B² B³ all read बलीयमिति ।
( ४ )-वास ( श B³ ) नयो-B² B³,-मासनयो-B¹.

## मधुमांसलवणस्त्र्यवलेखनानि वर्जयेत् ॥३५॥

केशनिवर्त्तनं नाम ताम्रमयेन क्षुरेण केशानां व्यूहनम् । अधः शयीतेति खट्वाशयनप्रतिषेधः । अवलेखनं नाम श्मश्रुवापनं दन्तधावनं वासःप्रक्षालनं[1] केशप्रसाधनं गात्रोन्मर्दनाञ्जनादीनि ॥

## ऋतौ भार्यामुपेयात् ॥ ३६ ॥

अविशेषेण पूर्वस्मिन्वाक्ये स्त्री[2]प्रतिषेधस्तस्यायमपवादो द्रष्टव्यः॥

## वापनं सर्वेषु पर्वसु ॥ ३७ ॥

## आद्योत्तमयोर्वा ॥ ३८ ॥

सर्वग्रहणम् "आद्योत्तमयोर्वा" (२।१५) इति विधिरसार्थम् । इह वापनमिति केशवापनं विधीयते । यदि "श्मश्रूणि वापयीत" (२।१५) इति विहितस्य विकल्पार्थम् "आद्योत्तमयोर्वा" (२।१५) इति वापनग्रहणेन (१=-णं) स्यात्तदिहैव स्यात्-श्मश्रूणि वापयीत । सर्वेषु पर्वसु आद्योत्तमयोर्वा—इति । एवं द्वित्वाप(१ = द्विर्वापन-)ग्रह[3]णादेतदन्यद्वापनमिति सिद्धम् । तस्मादिह केशवापनं चोद्यते ।

---

(१)-प्रक्षालन B[2] B[3],-प्रत्नू (?) नं B[1].

(२) स्त्री-B[2] B[3], स्त्र्य-B[1].

(३) द्वित्वापग्रह-B[1]; द्वितापग्रह-B[2], द्वित्वाव (after this -पन- supplied on margin) ग्रह-B[3].

आह। यद्येवं किमेतेन श्मश्रुवापनेन विहितेन श्मश्रुवापनस्यापि केशवापनेऽन्तर्भावादिति। एवं सिद्धेऽपि पूर्वं "श्मश्रूणि वापयीत" (२।१५) इति श्मश्रुवापनस्य मध्यमयोरपि पर्वणोर्नित्यत्वात्कर्त्तव्यमेवेत्येतदर्थम्। इतरथा मध्यमयोः पर्वणोः केशवापनेऽक्रियमाणे श्मश्रुवापनस्याक्रिया[1] स्यात्। तन्मा भूत्। मध्यमयोः पर्वणोर्यद्यपि केशवापनं न[2] क्रियेत तथापि श्मश्रुवापनं कर्त्तव्यमेवेत्येतदर्थं पूर्वं "श्मश्रूणि वापयीत" (२।१५) इति वचनम्।

इह सर्वग्रहणेन वैश्वदेवादी(१+नि) हवींष्यधि[3]कृतानि सर्वाणि गृह्यन्ते। इह केचित्सर्वग्रहणेनाहिताग्निनार्धमासे वापनं[4] कर्त्तव्यमिति वर्णयन्ति॥

(इति द्वितीये पञ्चदशी कण्डिका।)

---

(१) –वापनस्याक्रिया B¹, पानतस्य क्रिया B²; पातनस्य क्रिया B³.

(२) न B³; न omitted in B¹ B².

(३) –देवादी हवींष्यधि-B¹; –देव्यादिनि (।ति B³) हवि-B² B³.

(४) B¹; वापनं omitted in B² B³.

## अथ द्वितीये षोडशी कण्डिका

## पञ्चम्यां पौर्णमास्यां वरुणप्रघासैः ॥ १ ॥

आह । चातुर्मास्यसंज्ञयैव पञ्चम्यां पौर्णमास्यामिति सिद्धे पुनरिह पञ्चम्यां पौर्णमास्यामिति वचनं न वक्तव्यमिति । उच्यते । वक्तव्यमेव । कथम् । इयं न गौणी चातुर्मास्यसंज्ञेति ज्ञापनार्थम् । यदि गौणी संज्ञा स्यात्, यद्वा[1] द्वादशवार्षिकेषु चातुर्मास्येषु संज्ञा न प्राप्नुयात् । तथा सति "चातुर्मास्यानि प्रयोक्ष्यमाणः पूर्वेद्युर्वैश्वानरपार्जन्याम्" (२।१४) इति "चातुर्मास्यव्रतान्युपेयात्" (२।१५) इति च एवमादीनि द्वादशवार्षिकेषु न[2] प्राप्नुयुः । तन्नेष्यते । इष्यते च तत्रापि तेषां प्राप्तिः । तस्मादेतद्वचनम् ॥

## पश्चाद्दार्शपौर्णमासिकाया वेदेरुपविश्य प्रेषितोऽग्निप्रणयनीयाः प्रतिपद्यते ॥ २ ॥

इह दार्श्याः पौर्णमासिकाया[3] इत्यन्यतरेणैव सिद्धेऽपि दार्शपौर्णमासिकाया[4] इति वचनं वेदेरभावेऽपि तद्वदुपचारार्थम् । एतेनैव

---

(१) -यद्वा B¹ B³; यद्वा य B¹.

(२) न B¹, omitted in B² B³.

(३) दार्श्याः पौर्ण (र्ण B³) मासीयाः B² B³; दार्शायाः पौर्णमासिकाया B¹.

(४) -न्य-B² B³; नं-B¹.

(५) B¹; दर्शपौर्णमासिका B³; दर्श पू० सिका B².

प्रदर्शनेनाग्निहोत्रे "अपरेण वेदिमतिव्रज्य" (२।३) इत्यत्र तद्वदुपचारः कर्त्तव्यः । ए( १=ये-)षां पुनरध्वर्यूणामाधानात्प्रभृति सकृत्कृतैव वेदिरत्यन्तं धार्यते, न पुनः पुनः[1] प्रतितन्त्रं धार्यते, तत्र स्वयं सम्पन्नैव वेदिर्भवति ।

वैश्वदेव्यामग्निप्रणयनार्थं प्रेष्यति चेत् तत्राग्निप्रणयनीयामनूच्य[2] (१) इत्येतदर्थं प्रेषित इति वचनम् । अथवा "पञ्चम्यां पौर्णमास्यां वरुणप्रघासैः" (२।१६) इति निमित्तोपदेशादप्रेषितोऽपि पञ्चम्यां पौर्णमास्यां वरुणप्रघासेष्वनुब्रूयात् । तन्मा भूदिति।

इहान्वाहेत्यविद्यमानेऽप्यध्वर्योः सम्प्रैषेऽनुब्रूहीत्यनुशब्दादग्निप्रणयनीयायामनुवचनं भवति ॥

प्र देवं देव्या धियेति तिस्रः । इळायास्त्वा पदे वयमग्ने विश्वेभिः स्वनीक देवैरित्यर्धर्च आरमेत् ॥ ३ ॥

आह । भरतेत्यधिकपाद[3]ग्रहणमेव लघुतरं भवति परिभाषा च परिगृहीता भवतीति । उच्यते । एतास्तिस्रो विभागेनापि क्रियन्त

---

(१) पुनः पुनः B¹ B²; पुनः B³.

(२)-प्रणयनीयामनूच्य B¹; प्रणयननियमानूच्या B²;-प्रणयनी नियमानूच्यां B³.

(३) अधिकपाद-B² B³; अधिकार-B¹.

# प्राणसंततं भवतीति विज्ञायते ॥ ६ ॥

एव(?)वचनं यत्राक्षरैः सन्धानं कर्तुं न शक्यते तत्रैवेयं परिभाषा भवति। यत्र त्वक्षरैः सन्धानं कर्तुं शक्यते तत्र स्थानसंक्रमणे विद्यमानेऽपि कथमियं परिभाषा स्यादित्येतदर्थमुच्यते। तस्माद् "मध्यमस्थानेन प्रति प्रियतममित्युपसन्तनुयात्"[2] (४।१५) इत्यत्र प्राणसन्तानो न कर्त्तव्यः।

ये तु पुनरुच्चस्थानयोरप्येतां परिभाषामिच्छन्ति[3] (१+ते) ब्रुवते। "प्रति प्रियतममित्युपसन्तनुयात्"[4] (४।१५) इत्यत्र मध्यमस्थानेनोत्तमयेति च तृतीयानिर्देशेनैव सिध्यत्युपसन्तानः। "सामिधेनीनामुत्तमेन प्रणवेन" (१।२) इत्यत्र तृतीयानिर्देशेनैवोपसंतानवचनाद्धतेऽप्युपसंतानः क्रियते। तद्वदिहापि सिद्धेऽप्युपसन्तनुयादिति वचनमक्षर[5]सन्तानमेव (?)कर्त्तव्यमि(?)त्येतदर्थम्।

अन्ये तु ब्रुवते। न केवलं तृतीयानिर्देशेनैवोपसंतानः सिध्य-

---

(१) इयं B²; एतमियं B¹.

(२) प्रति (followed by blank space) त्नुयाद् B¹; प्रति० तनुयाद् B².

(३) इच्छंति B¹; इच्छंते B².

(४)-त्नुयाद् B¹; प्रति प्रिय० नुयाद् B².

(५) अक्षर-B¹; अन्वनु-B².

ति। यत्र षष्ठीनिर्देशो वा[1] "सामिधेनीनाम्" ( १।२ ) इति च, यथा च "तासामुत्तमेन" (२।१८) इत्यत्रे[2] तासामिति वा, यत्रोपसन्तनुयादिति वचनम्, तत्रोपसन्तानो भवति, न केवलं तृतीयानिर्देशमात्रेणैवेति ॥

## उत्तरमग्निमनुव्रजन्नुत्तराः ॥ ७ ॥

अग्निविशेषणार्थमुत्तरमिति वचनम्। तस्मादिह द्वावग्नी प्रणीयेते इति सूचयति ॥

## इमं महे विदथ्याय शूषमयमिह प्रथमो धायि धातृभिरिति तु राजन्यवैश्ययोराद्ये ॥ ८ ॥

एते राजन्यवैश्ययोरानन्तर्ययोगेनाद्ये[3] भवतः। "बहुषु बहूनामनुदेश आनन्तर्ययोग" ( २।१ ) इत्यत्र द्वयोरपि बहुष्वन्तर्भावादिह राजन्यवैश्ययोराद्याविधानात् परिशेषात् "प्र देवं देव्या धिया" ( २।१६ ) इत्येषा[4] ब्राह्मणस्याद्येत्यवगम्यते। अस्मादेव

---

(१)-न केचचिद् (पृ० २८६ पं ८-९) to-निर्देशो वा omitted in B³.

(२) उत्तमेनेत्यत्र B³; उत्तमेत्यत्र B¹ B².

(३) वा added in B¹.

(४) एवां B¹.

तासामृचां[1] सवर्णापेक्षत्वादन्यतरस्या ऋच आगमनेऽन्यतरस्या उद्धारः[2] कर्त्तव्य इति ॥

## पश्चादुत्तरस्या वेदेरवस्थाय ॥ ९ ॥

इहाप्युत्तरस्या वेदेरिति ब्रुवन् वेदेर्नानात्वं दर्शयति ।

इहाग्निद्वित्वे "अग्ने महाँ असि" ( १।२ ) इत्येवमादीनामग्न्यभिधाना[3]मूहो न कर्त्तव्य इति । कुतः । इहाङ्गारसमूहस्यैव द्वित्वं दृश्यते, न त्वाहवनीयसंज्ञाया अधिष्ठानदेवताया द्वित्वं दृश्यत इति । ता (?)अग्ने महां असीत्येवमादयः शब्दा[4] देवतामभिदधति, नाङ्गारसमूहम् । न च देवताद्वित्वं कदाचिदपि विद्यते । तस्मादनूह एवेति ।

"अग्निभ्यां प्रणीयमानाभ्यामनुब्रूहि" इति एकेषांचिदध्वर्यूणां द्विवत्सम्प्रैपदर्शनादाहवनीयद्वित्वमिति चेत्, तन्न । तत्र तु प्रणयनसमिन्धनयोरग्निशब्देनाङ्गारसमूह एवाभिधीयते । कुतः । नह्याहवनीयदेवतायाः प्रणयनं समिन्धनं वा कर्त्तुं शक्यते ।

---

( १ ) अवगम्यतेरमादेव तासामृचा ( sic ) B²; अवगम्यतेस्मादेव तासामृचा B³; अवगम्यतस्मादेतासामृचां B¹.

( २ ) उद्धारः B¹; उत्स्यानः B², lacuna in B³.

( ३ ) अग्न्यभिधाना- B¹; अग्न्याधान- B² B³.

( ४ ) शब्दा B¹; शब्द- B² B³.

आह। यद्येवमग्निप्रणयनादिषु सामिधेनीषु चोहः कर्त्तव्यः। एषां[1] द्विवचनेन सम्प्रैषस्तैः सह प्रयोग इति। उच्यते। नैष दोषः। तत्रानूह एव। कुतः। "तस्मादृचं नोहेत् (५।४) इति वचनात्। एषां (१ = येषां) प्रणयनसमिन्धनयोर्द्विवत्सम्प्रैषस्तेषामपि "अग्ने महाँ असि" (१।२) इत्येवमादयः शब्दा देवताम[2]भिदधति। कुत एतद्‌ गम्यते। उच्यते। येषां[3] द्विवत्सम्प्रैषस्तेषामेव वचनम् "वरुणप्रघासेषु यथाप्रकृतं होता कुर्यात्" इति न्याये(१+ना)पि सिद्धमग्निशब्दबर्हिःशब्दौ नोह्याविति।

उत्तरस्या वेदेरवस्थायेत्यत्र उत्तरस्या (१+इत्य्) अनुच्यमानेऽपि उत्तरस्यामेव वेद्यामवस्थानं सिध्यति। कुतः। "उत्तरमग्निमनुप्रजन्नुत्तराः" (२।१६) इत्यत्रोत्तरदर्शनादिति। उच्यते। एवं सिद्धेऽपि पुनरुत्तरस्या इति वचनमुत्तरस्यामेव वेद्यां होतुः सम्बन्धप्रसाधनार्थम्। तेन किं सिद्धं भवति। दक्षिणस्यां वेद्यां योऽध्वर्युरेव स्रुचावादत्ते[4] अस्माकं मन्त्रैर्नाभिधीयत[5] इति सिद्धं भवति। अध्वर्यूणां च वचनम् "यदेवाध्वर्युः करोति तदेव

---

(१) एषां B¹ B², एषा B³.
(२) देवताम-B² B, देवता अ-B¹.
(३) येषां B¹, एतेषां B² B³
(४) स्रुचावादत्ते B¹; स्रुचौ तै B², स्रुचौ ते B³.
(५) नाभिधीयत B² B³; नाभिधेये ते B¹.

प्रतिप्रस्थाता तूष्णीं करोति" । तस्मात्स्रुगादापनेऽध्वर्युशब्दस्रुकूशब्द-योरप्यनूह[1] एव ।

अथो (१ = अथोह-) पत्ते[2] ऊह्यानि पदानि वक्ष्यामः—

अग्ने महाँ असि ब्राह्मण भारतेति पञ्च । अग्नी महान्तौ स्थो ब्राह्मणौ भारतौ । प्रवरणपदानि एकं वा त्रीणि वा पञ्च वा भवन्ति तेषामूहः । वासिष्ठौ शाक्त्यौ पारा[3]शर्यौ ।

देवेद्ध इत्यादीन्यष्ट । देवेद्धौ मन्विद्धौ ऋषिष्टुतौ विप्रानुमदितौ कविशस्तौ ब्रह्मसंशितौ[4] घृताहवनौ प्रण्याविति । रथीरित्येकम् । रथ्याविति[5] । अतूर्त इत्यादीनि चत्वारि । अतूर्तौ होतारौ तूर्णी[6] हव्यवाहाविति। अग्ने इत्येकं पदम्[7]। अग्निरिति द्वि(?)[8]। त्व-

---

(१) -रनूह B¹.

(२) अथो पत्ते B² B³; अथो पदय B¹.

(३) परा-B¹.

(४) ब्रह्मसंशितौ B¹; ब्रह्मानुशंसितौ B³; ब्रह्मानुशंसितौ B².

(५) रथ्याविति B¹; रथाविति B² B³.

(६) तूर्णिर् B¹.

(७) पदम् omitted in B¹.

(८) अग्निरिति द्वि-B¹; अ(आ B³)सिमिति द्वि-B² B³. It is to be noted that B¹ B² B³ read द्वि-of this passage as one word with the following त्वम्.

कर्त्तव्यः । यक्षतमग्नेर्होतुः, यक्षतं स्वं महिमानमिति च । यजतां कृणोत्वित्येते एव यजतां (१) कृणुतमिति । अतोऽन्यान्यग्न्यभिधानानि च घृतवतीमध्वर्यू स्रुचमास्येथामिति । विश्ववारे इत्यस्य तु समर्थनिगदत्वादूहः कर्त्तव्यः, विश्ववारा इति ॥

## उत्तरवेदेस्तु सोमेषु ॥ १० ॥

सोमेष्विति बहुवचनं पशौ पाशुबन्धिकाया[2] वेदेः पश्चादवस्थानार्थम् ॥

## निहितेऽग्नौ सीद होतः स्व उ लोके चिकित्वान्नि होता होतृपदने विदान इति द्वे ॥ ११ ॥

"अग्ने विश्वेभिः स्वनीक देवैरित्यर्धर्चे आरमेत्" (२।१६) इत्यत्रार्द्धर्चावसाने संप्रैषाकाङ्क्षणं प्राप्तमपि निहितेऽग्नाविति निमित्तोपदेशान्न भवति । निहितेऽग्नावनुब्रूयादेव, न संप्रैषमाकाङ्क्षेतेति ॥

## परिधाय तस्मिन्नेवासन उपविश्य भूर्भुवः स्वरिति वाचं विसृजेत ॥ १२ ॥

(१) होतुः B² B³; होमः B¹.
(२) B¹; पशुसंबंधिकाया B² B³.

भूर्भुवः स्वरिति वाचं विसृजेतेत्यत्र वाग्विसर्गे मन्त्रव्यतिरिक्ता शरीरचेष्टा विद्यते, तथापि मन्त्रस्योपांशुत्वं भवति । तस्य कारणम् "जपानुमन्त्रणाप्यायनोपस्थानान्युपांशु" ( १।१ ) इति ॥

## अन्यत्रापि यत्रानुब्रुवन्ननुव्रजेत् ॥१३॥

अत्रोक्तमनुब्रुवन्ननुव्रजेदिति । अनुशब्दप्रयोगादनुवचनेऽवेयं परिभाषा नान्यत्रेति । तस्मात् घर्मे[2] "प्रैतु ब्रह्मणस्पतिरित्यनुव्रजेत्" (४।७) इत्यत्राभिपवन (? = ण) त्वान्न भवति यद्यप्यनुव्रजतोऽपि ॥

## तिष्ठत्सम्प्रैषे तु तथैव वाग्विसर्गः ॥१४॥

तिष्ठतः[3] सम्प्रैषे तिष्ठतैव वाग्विसर्गः कर्तव्यः । सोमप्रवह-णादीन्युदाहरणानि ॥

## अग्निमन्थनादिसमाना वैश्वदेव्या ॥१५॥

वैश्वदेव्यतिदेशादेवाग्निमन्थने सिद्धेऽपि पुनरिहाग्निमन्थना-दि(?)ति वचनं शुनासीरीयां(?) वैश्वदेव्यतिदिष्टायां तु[4] अग्निमन्थ-

---

( १ ) This Sūtra given as a part of the foregoing Sūtra in the commentary.

( २ ) घर्मे B¹; omitted in B² B³.

( ३ ) तिष्ठतः B² B³; तिष्ठत्-B¹.

( ४ ) तु B¹; अपि B² B³.

नस्यानित्यत्वप्रदर्शनार्थम् । अथवा[1] अग्निमन्थनं तन्त्राद्ध वाह्यमिति प्रदर्शनार्थम्। तस्मादग्निमन्थनादूर्ध्वं स्थानाचमने कर्त्तव्ये इति।

अथवा वैश्वदेव्याम[2]ग्निमन्थनमाहार्यमिति । कुतः । तत्र वैश्वदेव्यामिति सप्तमीनिर्देशात् । यत्र त्वग्निमन्थनमाहार्यं तत्र तन्निर्देशं करोति । यथा आतिथ्यायाम् "तस्या[3] अग्निमन्थनम्" (४।५) इति । ब्राह्मणे त्वग्निमन्थनमातिथ्यायामाम्नातम् ॥

[हविषां तु स्थाने षष्ठप्रभृतीनामिन्द्राग्नी मरुतो वरुणः कः ॥ १६ ॥]

[इन्द्राग्नी अवसागतं श्नथद् वृत्रमुत सनोति वाजं मरुतो यस्य हि क्षयेऽराइवेदचरमा अहेवेमं मे वरुण श्रुधि तत्त्वा यामि ब्रह्मणा वन्दमानः कया नश्चित्र आ भुवद् हिरण्यगर्भः समवर्तताग्र इति ॥ १७ ॥]

प्रतिप्रस्थाता वाजिने तृतीयः ॥१८॥

---

(१) अग्निमन्थने सिद्धेपि पुनरिह added in B².
(२)-म-omitted in B¹.
(३) तस्या omitted in B¹.

उपहवकाले प्रतिप्रस्थाता वाजिने तृतीयो भवति, न भक्षणे। यदि भक्षणे तृतीयत्वमिष्टं स्यात्, प्रतिप्रस्थाता वाजिने तृतीयो भक्षयति एवमवक्ष्यत्। यथा "सर्वेषु दीक्षितेषु गृहपतेस्तृतीयोत्तमौ भक्षौ" (४।७) इति। न च तत्र गृहपतिस्तृतीय उत्तमश्चेति। तस्माच्चोदनावैषम्यादिहोपहव एवाभिप्रेतः, न भक्षणे। भक्षणे चतुर्थ एवेति ॥

## संस्थितायामवभृथं व्रजन्ति ॥ १९ ॥

संस्थितायामिति वचनं सम्बन्धकरणार्थम्। सम्बन्धप्रयोजनम्-कुण्डपायिनामयने "मासं वरुणप्रघासैः" (१२।४) इत्यत्रावभृथस्य प्राप्त्यर्थम्। अथवा य एव तस्या इष्ट्याः कर्त्तारस्त एवावभृथं व्रजन्तीत्येतदर्थम् ॥

## तत्रावभृथेष्टिः कृताकृता ॥ २० ॥

तत्रग्रहणं तत्रावभृथेष्टिरेव कृताकृता, "पादानुदकान्तेऽवदध्यु." (६।१३) इत्येवमादि कर्त्तव्यमेवेति[3]। एके पुनरिष्ट्या (? =

---

(१) तृतीयो भक्षयति एव-B[2] B[3]; भक्षं इत्येव-B[1].

(२) य एव (? or एष) तस्या B[2]; य एषां तस्या B[3]; एव पुरुषा B[1].

(३) हि added in B[1].

-ष्टच )भावे "पादानुदकान्तेऽवदध्युः" इत्येतदपि न कुर्वन्ति। कुतः। यदि पादानुदकान्तेऽवदध्युरित्येतदादि कर्मेह नित्यमभविष्यत्तस्य विधानमिहैवाकरिष्यत्। यस्मादिह न विधीयते, तस्मादिष्टर्थभावे तस्याप्यभाव इति।

इह सोमे[2]ऽवभृथप्रकरणे "समानमत ऊर्ध्वं हृदयशूलेना संस्थाजपात्" (६।१३) इत्यत्र दर्शनादिहापि "प्रत्यायन्तः समिधः कुर्वते" (३।६) इत्ये (१+वमादि)[3] समिदाधानान्तमेतत्कर्मावभृथाङ्गमपि भवति, न केवलं हृदयशूलाङ्गमेव। तस्मादिहापि तत्कर्त्तव्यमेवेति। तत्रापि हृदयशूलानुमन्त्रणमच्छावाकादिभिर्न कर्त्तव्यमेवेति। कुतः। तेषां पशावनधिकृतत्वादिति॥

## तामुपरिष्टाद् व्याख्यास्यामः[4] ॥ २१ ॥

यथा सोमेऽवभृथेष्टिराम्नाता तथैवेह। तेनैव तन्त्रविकारेणेहापि कर्त्तव्येत्येतदर्थमेवैतदारभ्यते। इतरथा इहावभृथेष्टिरन्येति कृत्वाधिकृतं पौर्णमासतन्त्रमेव स्यात्। तन्मा भूदिति वचनम्।

यद्येवम्, एतत्सूत्रं नारब्धव्यमेव। अवभृथेष्टिरिति संज्ञासा-

(१) इष्टया-B².

(२) इह सोमे B² B³; omitted in B¹.

(३) इत्ये· (sic) B² B³; इत्येतत् B¹.

(४) For this Sūtra B¹ has तामु० स्यामः; B³ तामुप० ख्यामः; B² तामूपख्यामः

मान्यात् । एकत्रसंज्ञिता ( १ = त ) मन्य ( १+त्र ) तया संज्ञया चोद्यमाने पूर्व ( १ = र्व ) संज्ञितमेव भवति । यथा "इळामुपहूय" ( ३।६ ) इत्यत्र पूर्वोक्तमिळायामभिधानमन्यत्रापि इळायां भवति । तद्वदिहापि ।

तत्रैतत्स्यात् । इयं द( १=न )संज्ञा । अवभृथ इष्टिरवभृथेष्टिरिति विग्रहं करिष्याम इति । अत्रोच्यते । नायमर्थः । यदि संज्ञा न स्यात्, तत्रावभृथेष्टिरिति वचनमपार्थकं स्यात् । तथा सोमेऽपि "यद्योसंयाजेष्वरित्वावभृथं व्रजन्ति" ( ६।१३ ) इत्यत्रावभृथं प्रकृतेऽपि, पुनरप्याह "अवभृथेष्टचा निष्क्रम्यन्ति" ( ६।१३ ) इति । यदि संज्ञा न स्यात्, इष्टचा निष्क्रम्यन्तोऽन्येनावभृथा-

धिकारादवभृथेष्ट्या तिष्ठन्तश्चरन्तीति[1] सिध्यति। तस्मात्संज्ञैवैषा[2]।
तस्माचातुपरिष्टाद्व्याख्यास्याम इति न वक्तव्यमेव।

उच्यते। नैष दोषः। वाक्यधर्मोऽयम्। यत्र नित्या तत्रैव वक्ष्याम इति, इहानित्यत्वान्नोच्यत इति॥

## द्वयोर्मासयोरैन्द्राग्नः पशुः ॥ २२ ॥

चातुर्मास्याङ्गभूतोऽयं पशुः, न प्राकृतः "षाण्मास्यः सांवत्सरो वा" ( ३।८ ) इत्यत्र चोदितः। कथम्। सौमिकेषु चातुर्मास्येषु अग्निष्टोम ऐन्द्राग्नस्थान इति दर्शनात्। किं चैन्द्राग्नं पशुं[3](?) पर्वसु न गण्यते। कथम्। कुण्डपायिनामयने "मासं वैश्वदेवेन" ( १२।४ ) इत्यत्रादर्शनात्॥

( इति द्वितीये षोडशी कण्डिका। )

---

(१) B¹; एतावता to चरन्तीति omitted in B² B³.

(२) संज्ञा चैषा B¹.

(३) चन्द्राग्नं पशुं B¹; चैन्द्रं पशु B²; चैन्द्रं पशुं B³.

अथ द्वितीये सप्तदशी कण्डिका

तथा ततः साकमेधाः ॥ १ ॥

तत इत्यैन्द्राग्नात्पशोरित्यर्थः। तथेति द्वयोर्मासयोर्गतयोरित्यर्थः। तस्मिन्काले साकमेधा भवन्ति ॥

[ पूर्वेद्युरितस्र इष्टयोऽनुसवनम् ॥२॥ ]

[ प्रथमायामग्निरनीकवान् ॥ ३ ॥ ]

[ अनीकवन्तमूतयेऽग्निं गीर्भिर्हवामहे। स नः पर्षदति द्विषः ॥ सेनानीकेन सुविदत्रो अस्मे इति ॥ ४ ॥ ]

[ उत्तरस्यां वृधन्वन्तौ ॥ ५ ॥ ]

[ मरुतः सान्तपनाः ॥ ६ ॥ ]

[ सान्तपना इदं हविर्यां नो मरुतो अभिदुर्हृणायुरिति ॥ ७ ॥ ]

मरुद्भ्यो गृहमेधेभ्य उत्तराज्यभागप्रभृतीज्यान्ता ॥ ८ ॥

पूर्वं "[illegible] [illegible]" ( [illegible] ) इत्यत्र [illegible]

निर्दिश्य पुनर्गृहमेधेभ्यः क्रीळिभ्य[1] इति चतुर्थ्या निर्देशं करोति। तस्येदं प्रयोजनम्–गृहमेधेभ्यो गृहमेधिभ्यो वा एते एव याज्यानुवाक्ये कथं स्यातामिति। तथा क्रीळयो[2] (?) वा क्रीळिनो(?) वा एते याज्यानुवाक्ये इति। गृहमेधान्यजन्ति चोदयन्ति चेद्व वृक्षवद्रूपन्नेय-(?+म्)[3]। गृहमेधिनो यजन्ति चोदयन्ति चेद्दण्डिवत्। तथा क्रीळिन्(?) यजेति चेदग्निवत्। क्रीळिन इति चेद्दण्डिवद्रूपं नेयम्॥

[ गृहमेधास आगत प्रवुध्न्या व ईरते महांसीति ॥ ९ ॥ ]
[ पुष्टिमन्तौ ॥ १० ॥ ]
[ विराजौ ॥ ११ ॥ ]
[ संयाज्ये आनिगदे अन्यत्राप्य-नावाहने ॥ १२ ॥

अवभृथेष्टयादीन्यस्योदाहरणानि। संयाज्ये इत्यनुक्त्वा विराजावनिगदे अन्यत्राप्यनावाहने इत्येतावत्येवोच्यमाने, यत्र यत्रानावाहनं तत्र तत्र विराजावेव प्राप्नुयातां "पश्वलाभे पयस्या

(१) Cp. II. 17, 21.
(२) क्रीयो B¹.
(३) रूपं नेय B³; रूपं ने B²; रूपनयः B¹.

मैत्रावरुणमनूबन्ध्यास्थाने'' (६।१४) इत्येवमादिषु । तच्चा[2]-निगदम् । तस्मात्संयाज्ये इत्युच्यते । तस्मात्तत्र तत्र याज्यान्तरेण ये ये संयाज्ये प्राप्ते ते ते अनिगदे इत्यर्थः ।

अनावाहन इत्येतावता सिद्धेऽप्यन्यत्रापिवचनं गृहमेधीयायामप्यनावाहनपक्ष एवानिगदत्वमित्येतदर्थम् । केचिदध्वर्यवो गृहमेधीयायां सर्वं तन्त्रं कुर्वन्ति । तदा सनिगदत्वमेव ॥

## आवाहनेऽपि पित्र्यायां पशौ च ॥१३॥

पित्र्यायां पशौ[3] चेत्येतावता सिद्धेऽपि आवाहनेऽपि वचनं यथा अनावाहनमनिगदत्वस्य[4] कारणं तथैवावाहनमपि सनिगदत्वस्य कारणं कथं स्यादित्येतदर्थमावाहनेऽपीत्युच्यते । तस्माद्वैश्वदेव्यां यद्यपि वाजिनामनावाहनं भवति, तथाप्यग्न्यादीनामना-[7]वाहनात्सनिगदत्वमेव । इतरथा अस्मिन्वाक्ये आवाहनेऽपीति निगदस्य[8] कारणत्वेनावाहनेऽविज्ञाप्यमाने, पूर्वस्मिन्वाक्येऽना[9]वा-

---

(१) पशुलाभे पयस्थान B² B³; पशुलाभे पयस्याम् B¹.
(२) तथा-B² B³, तथा-B¹.
(३) पशौ B¹; पशउ B³; पशाचउ B².
(४)-पि B²;-ति B¹ B³.
(५) अनिगदत्वस्य B¹; अनिगदत्वस्या B³; अनिगदस्या B².
(६) स-B¹; omitted in B² B³.
(७)-दीनामना-B¹ B²;-दिनाना-B³.
(८) निगदस्य B¹; निगदस्या-B² B³.
(९) मना-B³; आना-B²; आ-B¹.

हन इति वचनमनावाहनं प्रवृत्तमिति कृत्व संयाज्ययोरनिगदत्वं स्यात् । तन्मा भूदिति ।

ये तु पुनरावाहनप्रतिषेधे उत्तरेषु निगदेषु[1] निगमनप्रतिषेधो न भवतीति वाजिन( ? = ना )मुत्तमप्रयाजादिषु निगदेषु निगमनं कुर्वन्ति, तेऽब्रुवन्–आवाहन इति[2] वचनमावाहनस्विष्टकृन्निगदयोः सम्बन्धकरणार्थमिति । तेन किं सिद्धं भवति । अनावाहितानां स्विष्टकृन्निगदेन[3] निगमनमिति सिध्यति । कौपीतकि[4]नामपि व्यक्तमेतत् । वाजिनामु[5]त्तमप्रयाजे सूक्तवाके च निगमनं विहितम् । तत्र निगमनपक्षे यदा सूक्तवाकादूर्ध्वं वाजिनयागः क्रियते तदा त्विदं हविरजुष्यन्ते[6](?) वर्धिष्यन्तो[7]–(?) महो ज्यायः करिष्यते[8](?) इत्येवमूहः कर्त्तव्यः ।

अवश्यमेतदेवाभ्युपगन्तव्यम्–आवाहनप्रतिषेध आवाहनमात्र-

---

( १ ) निगदेषु omitted in B³.
( २ )-ने इति B² B³,-नेत्रिति B¹.
( ३ ) निगदेनां B³.
( ४ )-कि-B³;-की-B¹ B².
( ५ ) वाजिनामु-B² B³; वाजिनमु-B¹.
( ६ ) अजुष्यंते B¹; आजुषंते B²; अजुषंते B³.
( ७ ) वर्धिष्यतो B²; वर्धिष्यसो B³; वर्द्धिष्यंते B¹.
( ८ ) करिष्यते B²; करिष्यंते B¹ B³.
( ९ ) B¹; आवाहना-B² B³.

प्रतिषेधो नोत्तरेषु[1] निगदेष्विति । आचार्यश्च ज्ञापयति । अनावाहितानामपि निगमनमुत्तरेषु विद्यत इति, यदयमाह[2]—"यथाचोदितमनावाहिताः" (१।५) इति । तस्मादना[3]वाहितानामप्युत्तरेषु निगमे( ? दे )षु निगमनं सिद्धमेव ।

नेति वयं ब्रूमः । आवाहनप्रतिषेधे सर्वनिगमनप्रतिषेधो भवत्येव । तस्य ज्ञापकमुपसत्प्रकरणे वक्ष्यामः[4] । अथ यदुत्त ( ? = क्त )म्—अनावाहितानामपि निगमने "यथाचोदितमनावाहिताः" (१।५) इत्येतद्ध ज्ञापकं भवतीति । तत्र ब्रूमः । इह त्रिविधमनावाहनं भवति । प्रमा[5]दात्प्रतिषेधात्खण्डतन्त्राच्च । तत्र खण्डतन्त्रत्वाद्यासामनावाहनं यथा "प्रयाजाद्यनुयाजान्ता (६।१३) इति, तदर्थं "यथाचोदितमनावाहिताः" (१।५) इति वचनम्, न वाजिनादीनां प्रतिषिद्धा[6]वाहनानामर्थायेति ॥

## बहु चैतस्यां रात्र्यामन्नं प्रसुवीरन् ॥१४॥

बहु च रात्र्यामिति वक्तव्ये एतस्यामिति[7] वचनं गृहमेधीयापि

---

(१) B¹; नोत्तरे तु B² B³.
(२) आह B¹; आवह B² B³.
(३) अना-B² B³, आ-B¹.
(४) प्रवक्ष्यामः B¹.
(५) प्रमा-B¹; प्रवा-B² B³.
(६) प्रतिषिद्धा-B¹; प्रतिषेधा-B² B³.
(७) एतस्यामिति B² B³, एतत्स्यामिति B¹.

रात्रौ समाप्यत इति[1] ज्ञापनार्थम् । बहु चेति चकार[2]ग्रहणमन्नं चा[3]न्यच्च नृत्यगीतानि[4] प्रसुवीरन्निति ॥

[तस्या विवासे पौर्णदर्वं जुहुयुः ॥१५॥]

[ ऋषभे रवाणे ॥ १६ ॥ ]

[ स्तनयित्नौ वा ॥ १७ ॥ ]

आग्नीध्रं हैके रावयन्ति ब्रह्मपुत्रं वदन्तः ॥ १८ ॥

ब्रह्मपुत्रं वदन्त इति ब्रह्मपुत्र ब्रूहि ब्रूहीति[5]व दन्त इत्यर्थः । अथवा ब्रह्मपुत्रोऽयमिति मन्यमाना इति हेतु (१+रु)पादीयते[6]। तस्मात् ब्रह्मणा वा प्रसूता जुहु (१+यु) रिति[7] सिध्यति ॥

यदि होतारं चोदयेयुस्तस्य याज्यानुवाक्ये ॥ १९ ॥

---

(१) इति omitted in B¹.

(२) चकार-B² B³; यत् प (-य-corrected to च on the margin) B¹.

(३) अन्नं चान्यच्च B³; अन्नं चांन्य च B²; अन्यचान्यच्च B¹.

(४) -गीतानि B¹ B²; -गीतादनि B³.

(५) ब्रहि ब्रूहीति B³; ब्रूहीति B²; ब्रहि ब्रहीति B¹.

(६) हेतु० पादीयते (sic) B³; हेतु० यते B²; हेतु (+space) पादीयते B¹.

(७) जुहुरिति B² B³; जुहुवितो B¹.

इह याज्यानुवाक्ये इति वचनं नियमार्थम्। तस्य याज्यानुवाक्ये एव[1] न तन्त्रमिति। अथवा याज्यानुवाक्ये इत्यनुच्यमाने एवमर्थो[2] गृह्येत। कथम्। यदि होतारं चोदयेयुस्तस्येत्येते ऋचौ मसवार्थौ (?) भवत इति। तन्मा भूदिति।

अनुवाक्यायां शतक्रतो इतीन्द्र[3]ग्रहणदर्शनादिन्द्रस्य याज्यायामादेशः[4] कर्त्तव्यः॥

[पूर्णा दर्वि परा पत सुपूर्णा पुनरापत।
वस्नेव विक्रीणावहा इषमूर्जं शतक्रतो॥
देहि मे ददामि ते।नि मे धेहि नि ते दधे।
अपामित्थ(?)मिव सम्भर कोऽम्बाददते
ददादिति ॥ २० ॥]
[ मरुद्भ्यः क्रीडिभ्य उत्तरा ॥ २१ ॥]
[ उत ब्रुवन्तु जन्तवोऽयं कृत्नुरगृभीत
इति परोक्षवार्त्रघ्नौ ॥ २२ ॥ ]
[ क्रीळं वः शर्धो मारुतमनर्वाणं न ये

(१) एव $B^2$ $B^3$, omitted in $B^1$.
(२) $B^1$, अर्थं $B^2$ $B^3$.
(३) इतींद्र-$B^1$, इंद्र-$B^2$ $B^3$.
(४) याज्यामादेशः $B^1$.

